ISSN 2347-369X

# PANACEA INTERNATIONAL RESEARCH JOURNAL

(A Quarterly Bilingual Inter-disciplinary Referred Journal)

# पैनासीआ इन्टरनेशनल रिसर्च जर्नल

(त्रैमासिक अन्तरअनुशासनात्मक द्विभाषी शोध-पत्रिका)

Volume-5, No. 2 October-December, 2017



**Publisher**
PANACEA RESEARCH FOUNDATION
"Shanti-Kuteer" 81, Vishvesariya Vistar, Triveni Nagar, Jaipur-302018
panaceairj@gmail.com ; +91-7742321377
**www.journalpanacea.in**

# *From the Editor's Desk*

**आ नो भद्राः क्रतवो यन्तु विश्वतः**

*Let noble thoughts come to us from all sides.*

(Rigveda, 1.89.1)

Dear Friends, I would like to convey my greetings and heartfelt thanks to all contributors and well wishers of JOURNAL PANACEA. Success of this journal is the endeavour of our whole team and our prudent Scholars like you. As Rigveda stated - Let the noble thoughts come to us from all sides, like wise PANACEA Research Foundation aims at Universal Solution for all queries of the research scholars. The meaning of word PANACEA (रामबाण) - A Single Remedy or Universal Solution is fulfilling its purpose while working for advancement of research, career, creativity, innovation, environment, education and entrepreneurship development. I am very much glad to present this new issue of PIRJ. I do believe that you would continue your kind cooperation and support.

This issue included research papers from different walks of disciplines. The first paper entitled "Annie Besant's views on Elementary School Education in her Educational Philosophy authored by Garima Sharma in the able guidance of Prof. Aarti Kalani. Next paper is "Value Education and Teacher" authored by Mr Ashok Jakhar and Dr. Mudit Rathore focused on the relevant of value based education system in this era of Globalisation. Dr Ram Babu Pandey is a well known Scholar of Sanskrit. He contributed his valuable paper on the interpretational dimensions of words. Dr Poorn Chandra Upadhyaya and Dr Rajesh Kumar Joshi have also been authored their papers based on Sanskrit perspectives.

Vedic Literature is the topic of next paper written by Dr Aditi Sharma. The Ethics of the great epic Ramayan is the next title of paper contributed by Mr Kailash Chandra Vaishnav. Dr Madhu Mathur has written on the magic of music meditation. Mr Pawan Kumar Sharma contributed his paper in the divine language Sanskrit. Next paper is based on the challenges before different languages and dialects of India written by Dr K R Mahiya. The consciousness of Dalit Feminism is the subject matter of next paper authored by Dr Vimlesh Sharma. Rajasthani Folk music has its multifarious dimensions.

Dr Anshu Verma authored the next paper on the contribution of Anthropologist Komal Kothari in this field. Ankita Saini and Dr Sunita Sharma authored their Paper on interpretation of RAS-SUTRAs. Mahakavi Bhas is the subject of next paper written by young Scholar Nirma Kumari Meena. Dr Ummed Singh authored his paper on Sanskrit Epic SAKET-

SAURABH. Jain philosophy is playing pivot role in the area of value education. Mr Ajit Kumar Jain in the eminent guidance of Dr Ashok Kumar Sidana authored a paper on Jainism.

Dr Ranjana Garg contributed her paper on Assurance Committee of administration. Non-violence is the subject matter of next paper written by Dr Rajendra Singh Gurjar. Vikramaditya Maurya authored his paper on journalism. Uttar-ramacharitra is the title of research paper complied by Krishna Kumar Sharma. Scholar Richa Angira compiled her paper on Public Movement and Social Change. Tuition tendencies are decreasing creativity and innovation of students.

Dr Rajesh Kumar Jangid and Dr Ashok have focused on the same in their research paper. Post-modernity and morality dilemma is the subject matter of next paper authored by Research Scholar Seema Saini. Suman Lata Yadav wrote her paper on Teaching Effectiveness in the eminent guidance of Dr Sunita Bhargava. Guardian's impact on academic achievements of their kids is the topic of the paper written by Mrs Saroj Champawat in the able guidance of Prof. Anshu Bhatia. A comparative study of professional and academic students is the topic of next paper authored by Abha Gupta in the eminent guidance of Dr Vijay Laxmi Sharma. Sangeeta Arya and Dr Ravibala Solanki authored their paper on Human Rights. Manju Gupta wrote her paper on professional maturity of students. Last but not least paper is about the role of media in Election Canvassing and Mandate.

Again I would like to convey my thankful gratitude to all contributor Scholars for their valuable papers. I hope that your enthusiastic initiation for research activities would be continued in future also. I wish you all the best. If you have any suggestions, please feel free to send at our email - panaceairj@gmail.com.

Regards …

**Dr G L Sharma**
**Founder and Honorary Editor-in-Chief**
**drgls@ymail.com**

# Index

4

# शब्दोऽपि प्रातिपदिकार्थः

डॉ. रामबाबूपाण्डेयः

'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति सिद्धान्तानुसारेण प्रकृतिप्रत्ययविशिष्टानां शब्दानामेव लोकेऽर्थबोधकत्वमिति। तत्रा प्रकृतिर्द्विधा नामरूपा, आख्यातरूपा च। नामार्थविषये बहवः विप्रतिपत्तयः सन्ति। तत्रा केचन जातिरेव नामार्थः, केचिच्च जातिर्व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः, अन्ये तु प्रवृत्तिनिमित्त–व्यक्तिलिङ्गञ्चेति त्रिाकं प्रातिपदिकार्थः, प्रवृत्तिनिमित्त–व्यक्ति–लिङ्गञ्संख्या चेति चतुष्कं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तव्यक्तिलिङ्गञ्संख्याकारक चेति प चकं प्रातिपदिकार्थः, इति स्वीकुर्वन्ति। किन्तु शब्दोऽपि प्रातिपदिकार्थः, अनेन प्रकारेण षोढाप्रातिपदिकार्थः, इति सिद्धान्तः।

वैयाकरणैः शक्यार्थो बौद्ध एव स्वीकृतः 'एवं शक्यार्थोऽपि बुद्धिसत्तासमाविष्ट एव, मास्तु बाह्यसत्ता समाविष्टः'[1]। अत एव 'घटोऽस्ति' 'घटो नास्ति' इत्यादौ 'अस्ति, नास्ति' क्रिययोः सार्थक्यम्। बौद्धार्थाभावे तु 'घटः' इत्यनेनैव बाह्यसत्ताविशिष्टस्य घटरूपार्थस्य बोधे 'अस्ति' इति क्रियाप्रयोगो निरर्थकः स्यात्। एव च बौद्धार्थस्य बौद्धशब्देन तादात्म्यात् शब्दोच्चारणे शब्दज्ञानजन्यायामर्थाकारान्तःकरणवृत्तौ शब्दाकारस्यापि विषयत्वात् शब्दस्यापि शाब्दबोधविषयत्वम् इति वैयाकरणानामभिप्रायः। उक्त च भर्तृहरिणा–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**[2]

अयम्भावः – लोके एतादृक् किमपि ज्ञानं नास्ति, यत् शब्दमविषयीकृत्य भासेत। शाब्दमशाब्दं वा सर्वं ज्ञानं शब्दानुस्यूतमेव प्रतीयते। एव चानुव्यवसायात्मकज्ञानेऽपि शब्दविषयकज्ञानस्य विषयत्वेन ज्ञानं शब्दविषयकत्वं सिद्ध्यति।

ननु 'अनुविद्धमिव' इत्यत्रोव शब्दप्रयोगे न वस्तुतो नानुविद्धमिति प्रतीयते, तर्हि कथमनया कारिकया शब्दस्य ज्ञानविषयत्वे हरिसम्मतिर्ज्ञाता स्यादिति चेत्? अत्रोच्यते– वैयाकरणनिकाये निखिलायं विश्वरूपप्रपञ्चः शब्दस्य परिणामः स्वीकृतः। उक्तञ्च–

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत।।**[3] इति

एव च शब्दज्ञानयोः वस्तुद्वयाभावादनुविद्धमिवेत्यत्रा 'इव' शब्दप्रयोगः। अथवा 'शब्दज्ञानयोस्तादात्म्यादेव सर्वं ज्ञानं शब्दानुस्यूतं प्रतीयते। तत्रा ज्ञाने शब्दनिरूपितं तादात्म्यमारोपितमेवेति बोधनेच्छया 'इव' शब्दप्रयोगः।

वस्तुतस्तु शब्दार्थयोर्वास्तविकतादात्म्यमादायार्थभाने शब्दभानमुपपादनीयम्। खड्गादिशब्दोच्चारणे मुखोच्छेदादिरूपदोषस्तु न मुखोच्छेदादिकारणतावच्छेदकीभूतसंयोगादिसम्बन्धस्य शब्दोऽभावादिति शाब्दिकाः। एव च शब्दार्थयोस्तादात्म्ये–नार्थविषयकज्ञाने शब्दस्य विषयत्वं भवत्येव। तस्माद् शब्दस्यापि ज्ञानविषयत्वं शब्दशक्यत्व च सिद्धति। अत एव घटमुच्चारय विष्णमुच्चारय अर्थं वदति इत्यादि व्यवहारः सङ्गच्छते। शब्दस्य ज्ञानविषयत्वे त्वर्थे उच्चारणकर्मत्वस्यासम्भवेन विष्णुमुच्चारय इत्यादौ शाब्दबोधनुपपत्त्या 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' प्रयोगोऽसङ्गतः स्यात्। उक्त च कौण्डभट्टेन – 'विष्णुमुच्चारय' इत्यादावर्थोच्चारणासम्भवेन विना शब्दविषयं शाब्दबोधसङ्गतिश्चेति सोऽपि प्रातिपदिकार्थः'[4] इति। शब्दस्यापि शब्दशक्यत्वे तु विष्णुरूपार्थबोधकं शब्दमुच्चारय इति बोधे न काप्यनुपपत्तिः।

एव च सर्वेषां शब्दानां शब्देऽर्थे चैकवृन्तगतपफलद्वयन्यायेन खण्डशः शक्तिः। शब्दार्थयोस्तु परस्परं विशेष्यविशेषणभावः। क्वचित् 'घटमुच्चारय' इत्यादौ वाचकत्वसम्बन्धेनार्थः शब्दे विशेषणं 'घटमानय' इत्यादौ च स्ववाच्यत्वसम्बन्धेन शब्दोऽर्थे विशेषणम्।

ननु शब्दस्य शब्दशक्यत्वाभावेऽपि 'घटमुच्चारय' इत्यादौ लक्षणया शाब्दबोधसम्भवे न काप्यनुपपत्तिरिति चे 'जबगडदशमुच्चारय' इत्यादौ जबगडदशेति समुदायस्य शक्यार्थाभावेन शक्यसम्बन्धरूपायाः शक्यतावच्छेदकारोपरूपाया वा लक्षणाया असम्भवात्। अतएवोक्तम्–'न च लक्षणया निर्वाहः निरूढलक्षणाया शक्त्यनतिरेकात् जबगडदशमुच्चारय इत्यादौ शक्याग्रहेण शक्य– सम्बन्धरूपलक्षणाया अग्रहाच्च'।[5]

कि च शब्दस्याशक्यत्वे 'गावमुच्चारय' इत्यादीनां भाषाशब्दानां साधुत्वं न स्यात्। इष्टापत्तिस्तु न वक्तुं शक्यते न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति यो हि मन्यतेऽपशब्दपदार्थकशब्दोऽपशब्दो भवति' तस्यापशब्द इत्येवापशब्दः स्यात्। इति भाष्यादनुकरणस्य साधुत्वं प्रतिपादितं एव च 'गावः' इत्यादि भाषाशब्दानां शक्यार्थाभावेन लक्षणाया असम्भवात्। एव च वृत्तिमत्वरूपार्थवत्त्वाभावात् प्रातिपदिकसंज्ञाया अभावे तस्य साधुत्वं न स्यात्। शब्दशक्यत्वे त्वनुकार्यानुकरण–योर्भेदविवक्षायां शब्दरूपार्थबोध्कत्वेनार्थवत्त्वात् प्रातिपदिकसंज्ञायां तस्य साधुत्वं सम्भवति।

नन्वनुकार्यानुकरणयोर्भेदविवक्षोऽभेदविवक्षा चेति पक्षद्वयं सम्भवति तथैव शिष्टप्रयोगात्। तथाहि 'भुवो वुग् लुघ्लिटोः'[6] इति सूत्रो भुवः इति निर्देशो भेदविवक्षा–पक्षस्य ज्ञापकः 'भू सत्तायाम्' इति निर्देशोऽभेदविवक्षा–पक्षस्य ज्ञापकः। एव च पक्षद्वये भेदविवक्षायामेव शब्दस्य प्रातिपदिकार्थत्वम्। उक्त च 'यद्यनुकार्यानुकरणयोर्भेदविवक्षा, तदा शब्दोऽपि प्रातिपदिकार्थः'[7] अभेदविवक्षायान्तु न शब्दस्य प्रातिपदिकार्थत्वमिति शब्दस्य ज्ञानविषयत्वमसार्वत्रिाकमिति चेद्? अत्रोच्यते–

अनुकार्यानुकरणयोर्भेदविवक्षायामनुकरणेनानुकार्यस्य पदानुपस्थितत्वात्

अनुकरणमनुकार्यस्य बोध्कम्, एव च तत्पक्षेऽनुकरणे{नुकार्यनिरूपिता बोध्कतारूपा शक्तिः स्वीकार्या अभेदपक्षे तु भेदनिबन्ध्ननिरूप्यनिरूपकत्वयोरसम्भवेनानुकरणे वृत्तिरसम्भवा, अपितु तत्राानुकरणस्य श्रावणप्रत्यक्षे यथानुकरणस्य प्रत्यक्षविषयता तथैवानुकार्यस्यापि तयोरभेदात्। एव च स्वानुकार्यप्रत्यक्षरूपा या अनुकरणात्मकशब्दजन्योपस्थितिः तामादाय शब्दस्य शाब्दबोधविषयत्वं सम्भवति। उक्त च –

**शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा।**
**नो चेच्छोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते।।**[8]

अत्र 'व' शब्दः सादृश्ये तथा च भेदपक्षे यथोऽनुकार्यरूपोऽर्थो विशेष्यतया शाब्दबोधे भासते तथोऽभेदपक्षेऽनुकार्य्याभिन्नानुकरणशब्दाऽप्यर्थः।

ननु घटपदादुपस्थितस्याकाशस्य शाब्दबोधविषयतावारणाय शाब्दबोधविषयतां प्रति वृत्तिज्ञानाधीनोपस्थितिविषयतायाः कारणत्वेनाभेदपक्षे चानुकरणे शक्तेरभावात् कथं शब्दस्य शाब्दबोधविषयतेति चेदुच्यते आश्रयतासम्बन्ध्ेन शक्तेः शब्देऽपि विद्यमानत्वा काप्यनुपपत्तिः।

नन्वेवं शक्तेर्विद्यमानत्वे वृत्तिमत्त्वरूपार्थवत्त्वमादाय प्रातिपदिकसंज्ञायामभेद पक्षेऽप्यनुकरणशब्दात् सुबुत्पत्तिः स्यादितिवाच्यम् निरूपकतासम्बन्ध्ेन वृत्तिमत्त्वरूपार्थवत्त्वस्य 'अर्थवदधतुरप्रत्ययः प्रातिपदिकम्'[9] इति सूत्रोण प्रातिपदिकसंज्ञायाः विधनात् प्रकृते न सुबुत्पत्त्यापत्तिः। शाब्दबोधविषयता च निरूपकताऽऽश्रयतोऽन्यतरसम्बन्ध्ेन वृत्तिमत् इति कल्पना काप्यनुपपत्तिः। उक्त च– 'निरूपकताश्रयतान्यतरसम्बन्ध्ेन वृत्तिमत् एव शाब्दबोधविषयत्वं कल्प्यते, इत्यनवद्यम्, सम्बन्ध्स्य निरूप्यत्वात्।[10]

एव च वृत्तिरूपसम्बन्ध्स्य शब्दार्थोभयनिष्ठत्वात् वृत्तिरूपसम्बन्ध्त्वं यथार्थस्य तथा वृत्तिमदर्थबोध्कत्वेन शब्दस्यापि वृत्तिरूपसम्बन्ध्त्वे बोधविषयत्वम्। उक्त च–'पदार्थस्येव तद्बोध्कत्वेन स्वस्यापि ज्ञानसम्भवाच्च'[11]। भर्तृहरिणापि उक्तम्–

**ग्राह्यत्वं ग्राहकत्व च द्वे शक्ती तेजसो यथा।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते।।**[12]
**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।।**

श्लोकेऽस्मिन् 'पृथगवस्थिते' इत्यनेन तयोरसमनैत्यं प्रदर्शितम्। यथा दीपादिरूपतेजसि विषयसन्निधने शक्तिद्वयं लोके दृष्टम्। विषयासन्निधने तु तेजसि ग्राह्यत्वमेव। एवं शब्दानामर्थस्य बाधभावे शक्तिद्वयम्। अर्थबाधसत्त्वे तु ग्राह्यत्वमेवेति।

वैयाकरणभूषणसारस्य तत्त्वदर्शिनीव्याख्यायां यद्यपि घटादयो ग्राह्या एव, न तु ग्राहकाः। चक्षुरादीनि ग्राहकाण्येव न तु ग्राह्याणि तथापि तेजसो दृष्टान्तत्वमुपपद्यते, तेजो यथा उपलब्धै विषयभावमाप मेव विषयोपलब्धै कारकत्वं प्रतिपद्यते तथा

शब्दोऽपि। ते चास्य प्रतिपाद्यप्रतिपादकत्वशक्ती नित्यमात्मभूते पृथगिव प्रत्यवभासेते। एतेन 'पृथगवस्थिते' इत्युक्त्या तयोरसमनैत्यं दर्शितमिति प चोलिनः न युक्तम्।

तस्माच्छब्दस्य बोधविषयत्वमवश्यमेव स्वीकरणीयम्। तदुक्तम् पत जलिनोऽपि 'स्वं रूपम्' इति सूत्राभाष्ये 'न वा एतत्प्रयोजनमस्ति। किं कारणम् शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। अतश्च शब्दपूर्वकः। योऽप्यसावाहूयते नाम्ना ना च यदा तेन नोपलब्धं भवति तदा पृच्छति किं भवानाह इति। शब्दपूर्वकश्चार्थस्य प्रत्ययः।[13] 'मन्त्रेऋचि, यजुषीति यदुच्यते, मन्त्राशब्दे ऋक्शब्दे यजुष्शब्दे च तस्य कार्यस्य सम्भवो नास्तीति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात् इति भाष्यस्य[14] व्याख्यानावसरे मन्त्रादिसहचरित इति प्रतीकमादाय कैयटेनोक्तम्–'साहचर्य च शब्दानुविद्धस्यैवार्थस्यावगमकम्'[15]।

यत्तु ज्ञानत्वव्यापकविषयिताकत्वं न शब्दे साधयितुं शक्यते घटादिप्रत्यक्षाद्यव्यवहित. प्राक्काले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षादेः घटपदादिविषयकत्वासम्भवादिति त पदपदार्थयोस्तादात्म्यमते पदोपस्थितेर्नैयत्यात्। न च तादात्म्ये 'घटरूपोऽर्थे घटशब्दो न' इति व्यवहारासधैंतिः भेदाभेदघटितस्येव तादात्म्यस्य स्वीकारेण भेदस्योद्भूतत्वविवक्षयां तथाव्यवहारसम्भवात्। पदविषयक–ज्ञानजनकतायाः प्रमाणचतुष्टयेऽपि स्वीकारेण ज्ञानमात्रो तद्भानस्य निराकर्तुम–शक्यत्वादिति।

एव च सर्वेषां मतेन शब्दस्य बोधविषयत्वेन तस्य नामार्थत्वं सिद्धति। एव च शब्दस्यापि नामार्थत्वे 'षोढ़ाप्रातिपदिकार्थः' इति सिद्धान्तः।इति।।

**सन्दर्भ :**


1. वै. सि. ल. म. बौद्धार्थनिरूणम् पृ. 203
2. वा. प. 1/124
3. वा. प. 1/121
4. वै. भू. सा. पृ. 254
5. वै. भू. सा. पृ. 255
6. प. सू. 6/4/88
7. वै. भू. सा. पृ. 256
8. वै. भू. सा. कारिका 26
9. पा. सू. 1/2/45
10. वै. भू. सा. पृ. 258
11. वै. भू. सा. पृ. 258
12. वा. प. 1/55
13. म. भा. 1/1/68
14. भाष्य 1/1/68
15. भाष्य प्रदीप 1/1/68


डॉ. रामबाबूपाण्डेयः, आ.तु.स.वि., नई दिल्ली

5

# अर्वाचीनाचार्यराधावल्लभीयसंस्कृतसाहित्ये मानवाधिकारस्य भावना

डॉ. पूर्णचन्द्र उपाधयायः

अपूर्वाऽस्मदीया प्राच्यसंस्कृतिः, या खलु आवैदिककालादिदानीन्तनं यावत्सुरभारती. साहित्यरत्नाकरगर्भनिर्भरा सती न केवलं भारतभुवि लब्धजन्मनामपि तु अखिलविश्वप्रसूतानां मानवानां पथप्रदर्शिकेति नास्ति काचिद्विप्रतिपत्तिः। तदत्र आश्रुतिलौकिकमर्वाचीनं यावत्समग्रमपि संस्कृतसाहित्यजातं विविधज्ञानविज्ञाननिर्भरं सन्नैकैः जनहितकारिभिस्तत्त्वैः विभूषितमेव। तदस्मिन् विश्वकल्याणकारिणि साहित्यजगति मानवीयहितसाधकेषु तत्तत्तत्त्वेषु अन्यतमं भवति मानवा– धिकारसरक्षणात्मिका भावना। तदिदं तत्त्वन्तु अतीतानागतसाम्प्रतिकमिति कृत्वा सार्वकालिकमेव इति निश्चप्रचम् । तदस्य मानवाधिकारस्य स्वरूपनिरूपणात्पूर्वमेव कस्तावन्मानवपदवाच्य इति तथ्यं ननु विमर्शनीयम् । मानवस्य मानवत्वं स्पष्टीकुर्वता हितोपदेषकारेणोक्तं यत् –

> आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिः नराणाम् ।
> धर्मो हि तेषामधिको विशेषः धर्मेण हीनाः पशुभिः समानाः।।[1]

तदेवं धर्म एव मानवस्य स्वरूपाधायकः तत्त्वविशेषः इति निश्चितिः। धर्म इत्यस्य प्रमुखं यत्तात्पर्यं तत्तु कर्त्तव्यसम्पादनमेव विषयीकरोति। सत्खलु श्रीमद्भगवद्गीतायां निरासक्तकर्मयोगस्य बीजरूपतामादधाति 'कर्मण्येवाधिकारस्ते..............' इत्यादिभिः शाश्वतवचोभिः[2]। तथ्यमिदं स्पष्टतामुपजाति 'कुर्वन्न्वेह कर्माणि जिजीविषेच्छतं समाः. ........'इत्यादेः ईषावास्योपनिषद्गतप्रतिपाद्यादपि[3]। तदेवं मानवत्वप्रतिपादके कर्मस्वरूपात्मके धर्म एवास्ति मानवस्याधिकारः सुदृढः। मानवाधिकारस्य परिभाषा निम्नलिखितानि तत्त्वानि अवलम्ब्य एव चरितार्थतामाप्नुयादिति कृत्वा तान्येव प्रतिपाद्यन्ते–

(क) कर्तव्यकर्मसम्पादनस्याधिकारः। (ख) प्राणधारणस्याधिकारः। (ग) स्वतन्त्रताया अधिकारः। (घ) समानताया अधिकारः। (ङ) मानवीयगरिमत्त्वस्याधिकारः।

उपर्युक्तानां तत्त्वानामाधारेणैवास्माभिः अर्वाचीनाचार्यराधावल्लभीयसंस्कृतसाहित्ये मानवाधिकारसंरक्षणात्मिकायाः भावनायास्तत्त्वानि यथाशक्ति निरूपयितुमिष्यन्ते 'लक्षणप्रमाणाभ्यां हि प्रमेयसिद्धिरिति' शास्त्रोक्तं मतमवलम्ब्य। प्राचीनसंस्कृतसाहित्यमिव अर्वाचीनसंस्कृतसाहित्यमपि मानवाधिकारसम्बन्धितत्त्वानां निर्मलं मुकुरम्। तदत्र

मानवबोधः, साम्यवादः, समाजवादश्चेत्यादिनि तत्त्वानि अर्वाचीनसंस्कृतसाहित्यस्य प्राणभूतानि सन्ति।

आचार्यराधावल्लभः सनातनसंस्कृतेः यत्कर्मप्राधान्यं तस्यैव पक्षधरः। श्रीमद्भगवद्गीतायाः सारं चेतसि कुर्वन्नसौ मानवसमाजं सावचेतयति स्वकर्मणः अधिकारं प्रति। सोऽसौ विषयत्यागं श्रेयस्करत्वमिति स्वीकुरुते, न तु कर्मत्यागम्। तदिदं तथ्यं लभ्यते तदीयगद्यकाव्यात् 'अन्यच्च' इति उपन्यासप्रतिपाद्यात्– 'वासुदेवः कृष्णो ब्रूते एकस्मै क्षणाय अपि कर्म नरं न जहाति। अवषेन जनेन कर्म करणीयं भवति, कामं स परिग्रही भवेत् सन्यासी वा। यदवष्यं करणीयमेव कर्म।'[4] इति। तदत्र कर्तव्यकर्मसमपादनस्याधिकारः यथा उल्लंघितः न स्यात्तथा प्रयत्नशीलः दरीदृश्यते कविरसौ मानवस्य मानवत्वाश्रयि वैशिष्ट्यमिदं यत् अन्योन्याश्रयिणी संवेदनशीलता। या खलु अन्येशु प्राणिषु दर्शनदुर्लभा। तस्याः संवेदनशीलतायाः संरक्षणमेव मानवाधिकारस्य प्रमुखमुद्देश्यम्। अर्वाचीनसुरभारतीसमुपासकेशु मूर्धन्यभूतेश्वन्यतमः त्रिपाठी राधावल्लभः संवेदनशीलतायाः साक्षात्प्रतिमूर्त्तिरेव। तद्धि तथाकथितेऽस्मिन् प्रगतिवादान्वितभौतिकवादयुगे सामाजिकीं विसंगतिं विशेषतया दुर्बलस्योपरि सबलस्य पराभवत्वं दर्शं दर्शं नितरां दूयते जनवादिनो कवेरस्य चेतरिति तद्भावनाप्रसृतं निम्नाङ्कितं पद्यं यथा –

त्रायते दुर्बलं मत्स्यमेनं लघुं
ग्रस्यमानं तु पीनेन मीनेन कः?
पश्यतो विप्लवं क्षुण्णपाथनिधौ
मानसे धीवरस्य व्यथा जासते।।[5]

पद्येऽत्र कविः प्रतीकात्मकत्वेन संसारं सागरम् आत्मानं च धीवरं कल्पयति। अर्थबलजनबलरहितः मानवस्तु दुर्बलमीन इव, अपि च धनजनबलमदान्धः पुरुषः पीनमीन इव। वस्तुतः पद्येऽस्मिन् कवेर्भाव अतीव मर्मस्पर्शी एव। भावना एव मानवीयसंवेदना। सैव संवेदना समानताया अधिकार इति मानवाधिकारस्य बीजरूपमिति मन्तव्यम्। अपरमेकं यथार्थस्वरूपख्यापकं पद्यं यथा –

अभिसन्धिविदीर्णा भूः शोषिता स्नेहवर्जिता।
शोषितानां जनानां स्यान्मनोभूर्विक्लवा यथा।।
ग्लपयन् रसवर्जं स शोषयन् निखिलाः प्रजाः।
निदाघो निर्दयं शास्ति क्रूरो भूमिपतिर्यथा।।[6]

पद्यऽस्मिन् निदाघवर्णनव्याजेन निष्करुणहृदयः प्रजातन्त्राधिपः राजतन्त्राधिपो वा निरीहसामान्यजनानां सन्तापको भवतीति कवेर्विगलितान्तःकरणत्वं तदीयमुदारत्वं प्रकटयल्लक्षीकरोति समानताया अधिकारम् इति स्पष्टमेव ।

अपि च प्रत्येकस्य मानवस्यास्ति प्राणधारणाधिकार इति मानवाधिकारस्य यदनन्यमङ्गभूतं तदपि प्रतिफलति कविवरत्रिपाठिन राटिकालहरीति काव्ये । तदनुसारं रोटिका तु दरिद्राणां श्रमिकाणां वा जीवनमेव । क्षुधापीडितैस्तैः महता श्रमेण एव कादाचित्कतया रोटिकेयं लभ्यते उत न । तद्धि –

अर्ज्यते रोटिका केनचित् स्वैः श्रमैः
स्वेदधाराचिंतैरुच्छ्वसद्बाहुभिः।
खाद्यते निःश्रमं तुन्दिलश्रेष्ठिभिः
गोर्गलीन् ह्रेपयद्भिः कुलाङ्गारकैः।।[7]

अपि च बुभुक्षितैः दरिद्रैः निःशक्तैर्वा न तथा दुष्कृत्यं पापात्मकमाचर्यते, यथा उदरम्भरिभिः धनाढ्यैः सुसम्पन्नैः आचर्यते इति वस्तुतत्त्वमुद्घाटयता कविवरेणानेन तत्प्रतिपाद्यते यथा –

बुभुक्षितः करोत्येव पापानीति वचो वृथा।
उदरम्भरयः किं किं पापमत्र न कुरुते।।[8]

मानवाधिकारभावनात्मकतत्त्वेष्वन्यतमं यन्मानवीयगरिमत्त्वस्याधिकारस्तदपि भृशं परिलक्ष्यते त्रिपाठिवर्यस्य काव्येष्विति कानिचन उदाहरणानि प्रतिपाद्य विमर्शयितुमिष्यते। तदत्र –

त्रासो यो वरयातृभिः बहुकृतः कोलाहलाडम्बरैः
यत्सम्बन्धिभिरर्थगृध्नुभिरहो याच्ञा कृता शम्बरैः।
द्रक्ष्यामस्तनयां तवापि सधमत्कारं च यद्भाषितं
प्रस्थानावसरे च तैर्न खलु तद्वाच्यं वधूवन्धुभिः।।[9]

तदस्मिन्पद्ये श्वशुरालयसंप्राप्तायाः नववध्वाः भीतभीतायाः चकितचकितायाश्च दुःखस्थायाश्चित्रणेन सह वरपक्षीयाणां दुराचरणेन शङ्काकुलितचेतसां सन्त्रस्तानां कन्यापक्षीयजनानां सूक्ष्ममनोवैज्ञानिकं विश्लेषणं चिकीर्षितं मार्मिकरूपेण। तदत्र अन्तिमवाक्यगतं यत्प्रतिपाद्यं तत्तु नार्याः स्वाभिमानस्य गरिम्णत्वस्य वा संरक्षणात्मिकां भावनां व्यनक्ति।

नैतावतैव सन्तुष्यत्यसावाचार्यः, स तु साम्प्रतिके समाजे व्याप्तविसङ्गतिशु अन्यतमं नारीशीलत्वभङ्गरूपिमानवाधिकरोल्लङ्घनं दर्शं दर्शं व्यथतेघ्न्तः अपि च तत्समाधानपरकं तज्जन्यभयाभयपरिणतिं प्रति चाश्वस्तो भवति। तदत्रासौ सीताद्रौपदीशकुन्तलादीनां प्रतीकात्मकत्वेन तथ्यमेतत्प्रतिपादयन् ब्रूते –

अद्यापि दण्डकवने ह्रियते च सीता
क्रूरेण दस्युचरितेन दशाननेन ।

नायाति किन्तु बत कश्चिदहो जटायु–
स्त्रातुं विदेहदुहितां करुणं लम्पन्तीम्।।[10]

अपि च

कृष्णा च कृष्णचरितेन तथा सभायां
दुःशासनेन गतभीतिनयेन कृष्टा।
अद्यापिदीनवदनेन जनेन दृश्टा
कृष्णं समाह्वयति दीनगिरा भयार्द्रा।।[11]

विशयेऽस्मिन् सहृदयोऽसौ कविः सुदृढमाशावान् आस्थावांश्च यद् यथा पुरा दक्षप्रजापतेः यज्ञाग्नौ दग्धीभूतां सतीमसमर्थयन् कुपिता रूद्रः स्वगणैः सह तत्प्रतिकर्तुं ताण्डवम् अरचयत्, तथैव इदानीन्तनकालेघपि नारीन् प्रति अत्याचारम् आचरतां धर्माडम्बरतां दुर्दाम्भिकानां विनाशार्थं शंकरः जनतामाध्यमेन तत्प्रतीकारात्मकं ताण्डवम् अवश्यं रचयेदिति। तद्भावपरिप्रकाशकशब्दाः यथा –

दग्धासीत्खलु दक्षयज्ञदहनज्वालासु पूर्वं सती–
दाहं नैव समर्थयन् ज्वलितदृक् क्रुद्धो यथा धूर्जटिः।
अन्यायं प्रतिकर्तुमेव भगवान् दक्षक्रतुं नाशयन्–
नुग्रं ताण्डवमाचरन्नजनयच्छ्रीवीरभद्रगणम्।।[12]

अपि च समष्टिरिति काव्यसंग्रहे कविवरस्यास्य नारीचैतन्यं किमपि किमप्यत्याधुनिकतां भजते साम्प्रतिकसामाजिकघटितघटनाजातं चेतसि विष्लेशयदेव। तत्र 'नवा नायिका' शीर्शकान्विते काव्ये कवेष्वतः दोदूयते यन्नार्याः नियतिनियमितं यत्स्वाभाविकं सौन्दर्यं तदीयं सहजमाचेष्टनं चैतत्सर्वं भौतिकवादप्राबल्येन विनष्टप्रायमिदानीम्, अपि च नार्याः अस्मितारक्षणे सर्वथा भीतिमयी आशंका मनसि आलोड्यमाना इति कियन्न मानवाधिकारस्योल्लङ्घनम्। यद् वयं दैनन्दिनं समाचारवृत्तपत्रेशु दूरदर्शनप्रसारितसमाचारेषु च अवलोकयामः तत्सर्वं प्रतिफलति पद्यमयेशु वाक्येष्वत्र –

सा रात्रेः पर्यायं समाप्य स्वयमेव विवर्णमुखी निस्सरति
कस्माच्चिच्च आह्वानकेन्द्रात्
तया साकमपि तन्न घटेत
यस्य वार्त्ताभिः पूरितानि भवन्ति दैनन्दिनवार्त्तापत्राणि
इत्याशङ्कमाना मनोदीपे ज्योतिर्ज्वलति च तदीये किमपि तत्।।[13]

उपर्युक्तेषु पद्येष्वेतेषु नारीसंवेदनाप्रतिपादनपुरस्सरं प्रतिफलन्ति मानवीय–गरिमत्त्वाधिकारस्योल्लंघनं, मानवीयस्वातन्त्र्याधिकारस्योल्लंघनं, तन्निराकरणोपायाश्चेति

सुस्पष्टमेव। तदेवमस्य अन्यच्च, अभिनवशुकसारिका, स्मितरेखा चेत्यादिषु गद्यकाव्येषु तथा पेक्षणकशतकम्, तण्डुलप्रस्थीयम्, चेत्यादिशु दृश्यकाव्येषु भृशं नदति नारीस्वाभिमानसंरक्षणात्मिकायाः मानवाधिकारभावनायाः विप्लवात्मकः स्वरः। रोटिकालहरी, जनतालहरीत्यादिशु लघुकाव्येषु श्रमिकाणां समस्यां दयनीयदशां च प्रतिपादयताधभिनवकविनानेन स्वकीयमानवीयसंवेदनशीलतायाः परिचयः प्रदत्तः। मशकधानी, मुक्तिश्चेत्याख्ययोः लघुनाट्ययोः अन्यत्रापि मानवीयगरिम्णः हननं प्रति कवेरस्य तीव्रः कटाक्षः दरीदृश्यते। दिङ्मात्रं तद्यथा –

स्वातन्त्र्येघपि समागते विदलितो नो पारतन्त्र्यात्मको
भावो भास्वति सत्यपि प्रभवति क्लेशाय गाढं तमः।
संकल्पः किल मुक्तये प्रतिजनं चेतःसु संजायताम्
मुक्तिरेशु तथा भवत्यभिनयः सत्यान्वितो मुक्तिदः।।[14]

तदित्थन्तया विवेचनेन निश्कर्शोघ्यं लभ्यते यदाचार्यत्रिपाठिवर्यस्य सम्पूर्ण एव संस्कृतसाहित्ये मानवाधिकारस्य तत्त्वानि, तदुल्लंघनानि, तत्समाधानात्मकसंवेदनाश्च प्राचुर्येण परिलक्ष्यन्ते इति दिक्।

## सन्दर्भ :

1. हितोपदेशः = 25
2. गीता = 2/47
3. ईशा. = 2
4. अन्यच्च = पृ.सं. 98
5. गीतधीवरम्, प्रथमसर्गः, गीतिः = 1 पृ.सं. 17
6. लहरीदशकम् = निदाघलहरी पृ.सं. 2–3
7. लहरीदशकम् = रोटिकालहरी पृ.सं. 32
8. लहरीदशकम् = निदाघलहरी पृ.सं. 10
9. समश्टिः = न खलु तद्वाच्यम्, पृ.सं. 45
10. लहरीदशकम् = अद्यापिलहरी पृ.सं. 20
11. लहरीदषकम् = अद्यापिलहरी पृ.सं. 21
12. लहरीदषकम् = जनतालहरी पृ.सं. 30
13. समष्टिः, नवा नायिका = पृ.सं. 51
14. मुक्तिः, प्रहसनम् = नान्दीपाठः

डॉ. पूर्णचन्द्र उपाध्यायः, संस्कृतविभागाध्यक्षः, राजकीयमहाविद्यालयः, बून्दी (राजस्थानम्)

6

# भगवद्गीतायाः ज्ञानकर्मभक्तिसन्देशः - भारतस्य अभिज्ञानम

डॉ. राजेश कुमार जोशी


## सार

गीता महाभारतस्य समेषां संकल्पानां सन्देशाणां च द्राक्षापाकरूपेण कथ्यते। कर्म–ज्ञान–भक्तियोगस्य त्रिवेणीरूपेण अस्यां त्रिवेण्यां स्नानं कृत्वा सम्पूर्ण विश्वस्य मनुष्याणां कल्मषरूपेण विद्यमानं अज्ञानतिमिरान्धत्वं दूरीभवति। श्रीकृष्णः संदेशं दत्तवान् यत् 'कर्म एव पूजनमस्ति'। गीतायां समता योगरूपेण स्वीक्रियते – 'समत्वं योग उच्यते' इति। वस्तुतः योगस्य आवश्यकता कर्मणि एवास्ति। योगभिन्न कर्म किमपि नास्ति। सम्पूर्ण ज्ञानस्य स्रोतः स्वयम् ईश्वरः भवति। तस्य ज्ञानमेव परं ज्ञानमस्ति। परा अपराभेदेन ज्ञानं द्विविधं वर्णितम्। अपरातः परार्थं गमनमेव ज्ञानयोगस्य ध्येयमस्ति। गीतायां भक्तियोगस्यारम्भः सप्तमाध्यायात् भवति। भक्त्यर्थं चित्तस्यैकाग्रतायां बलं दत्तम्। चित्तस्यैकाग्रतातः भक्त्याः समग्रतापर्यन्तं भक्तिगंगा सततं प्रवाहिता वर्तते।


**संकेताक्षर** – त्रिवेणी, अनासक्त, गीताभाष्यः, सात्त्विकं कर्म, राजसं कर्म, तामसं कर्म, सर्वगुह्यतमः, अनन्यशरण्यतया, अद्वेष्टा सर्वभूतानां, विश्वरूपदर्शनम्।

श्रीमद्भगवद्गीता महर्षिवेदव्यासविरचिता भगवान् श्रीकृष्णस्य मुखारविन्दात् निःसृता परमरहस्यमयी दिव्यवाणी अस्ति। किंकर्तव्यविमूढ अर्जुनं योगेश्वरकृष्णः यां दिव्यां वाणीमकथयत् सैव गीतारूपेण प्रसृता अभवत्।

गीता कर्मयोग–ज्ञानयोग–भक्तियोगस्य त्रिवेणीरूपेण प्रथितास्ति। अस्यां त्रिवेण्यां स्नानं कृत्वा सम्पूर्ण विश्वस्य मनुयाणां कल्मषरूपेण विद्यमानं अज्ञानतिमिरान्धत्वं दूरीभवति।

श्रीमद्भगवद्गीता महर्षि वेदव्यासविरचितस्य सांस्कृतिकविश्वकोषनाम्ना प्रसिद्धस्य महाभारतस्य अंशभूतास्ति। गीता स्वतन्त्रग्रन्थतयापि संस्कृतसाहित्यस्य सर्वोच्चं गौरवभूतं ग्रन्थरत्नरूपेण जनैः समाद्रियते। भगवद्गीता श्रुतीनां, उपनिषदां, दर्शनानां च सारतत्त्वं प्रस्तौति। उपनिषत्सु दार्शनिकविचाराणां सिद्धान्तानां वा काठिन्यमस्ति, परन्तु गीतायां मनोज्ञया पद्धत्या तेषां संक्षेपतः भावप्रकाशनमतीव हृद्यं प्रतीयते। यथोक्तम् –

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।<br>
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीताऽमृतं महत्।।[1]

यदि केवलं सप्तशती गीतेका एव अधीयते, विविच्यते, चिन्त्यते, लौकिकजीवने व्यवह्रियते च तर्हि मानवजीवनं सर्वथा सुख–शान्ति–समन्वितं समुन्नतं च भविष्यति।

समालोचनेन एतत् सिध्यति यद् गीता मानवजीवने कर्मोपदेशं प्रसारयति, लोकहितं सम्पादयति, लोकजीवने च निःश्रेयसे कल्पते। इदमेव वैशिष्ट्मालक्ष्य श्लोकमिदं केनापि साधूच्यते –

गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्मात विनिःसृताः।।

श्रीमद्भगवद्गीता महाभारतस्य भीष्मपर्वणि विद्यते। कुरुक्षेत्रस्य युद्धभूमौ विशादग्रस्त अर्जुनाय निष्कामकर्मणः शिक्षां प्रयच्छता भगवता श्रीकृष्णेन अत्र ज्ञान–भक्ति–कर्मणां समन्वयः प्रस्तुतः। अनासक्त भावेनैव कार्यकरणं गीतायाः परमोपदेशः। ज्ञानविज्ञानसमन्वयः, निष्कामकर्मदीक्षा, अनासक्तभावेन क्रियमाणकर्मणो बन्धनमुक्तित्वम्, कर्त्तव्यपालनेन श्रेयःसम्पादनत्वं च सर्वमपि प्रतिपादनमतीव सारल्येन वर्णितमस्ति।

भगवद्गीता मानवोचितकर्तव्यपालनं कुर्वती देवत्वशिखरमारूढं करोति। इयं जीवनात् पलायनं कृत्वा कर्मविरतसंन्यासस्य शिक्षां न ददाति प्रत्युत सांसारिककर्माणि पूरयन् संसारे एव परमार्थस्य निरूपणं करोति। अस्मिन् संसारस्य जीवनसंघर्षप्रांगणे उत्थितः प्रत्येक मनुष्यः अर्जुनः विद्यते। गीता कृष्णरूपेण तस्य मार्गदर्शनं करोति। जनानां परिस्थितिजन्योत्पन्नसंघर्षे उचितानुचितानां चयनस्य नाम गीता अस्ति। गीता संन्यासस्वार्थयोः मध्ये निष्कामकर्मणः सदेशं ददाति।

गीतायाः भाष्येषु भगवत्पाद शंकराचार्यस्य 'गीताभाष्य' (शांकरभाष्य), श्रीरामानुजाचार्यस्य 'श्रीभाष्य' पंकृ श्रीपाद दामोदर सातवलेकर विरचितं 'पुरुषार्थबोधिनी भाषा–टिका' क्रमशः ज्ञान–भक्ति–कर्मयोगस्य प्रतिनिधिभूताः भाष्याः सन्ति। आधुनिकयुगस्य महान् सिद्धः सर्वोदयी भूदानी विचारकः विनोबाभावेन लिखितवान् –'गीता महाभारतस्य मध्यभागस्थित एको उच्चदीपक इव प्रकाशस्तम्भोऽस्ति यस्य प्रकाशः सम्पूर्णमहाभारतं प्रकाशयति।[2]

भगवद्गीतायां सप्तशतसंख्यकाः श्लोकाः सन्ति ये अष्टादशाध्यायेषु वर्णिताः सन्ति। अस्य प्रत्येकं श्श्लोकोऽभिमंत्रितसदृशोऽस्ति, यस्य जीवने अनुपालनेन व्यक्तित्वविकासः भवति। गीतायाः सरस्वतीसदृशं निर्मलज्ञानम्, कालिन्दीसमं कर्म, भक्तिरूपायां गंगायां मिलित्वा विराटमहासागररूपे परमविभौ समाहितं करोति यत्र मानवः महामानवस्वरूपं प्राप्नोति।

**कर्मयोगः**

कर्मशब्दः स्वधर्मस्यार्थे निरुपितः अस्ति। समाजेन स्वीकृतस्य स्वकर्मणः स्वधर्मस्य च पालनम् श्रेयस्करम्। योगेश्वरकृष्णस्य स्पष्टः उद्घोषः अस्ति –

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'।[3]

श्रीकृष्णः संदेशं दत्तवान् यत् 'कर्म एव पूजनमस्ति'। गीतायां समता योगरूपेण स्वीक्रियते – 'समत्वं योग उच्यते' इति। वस्तुतः योगस्य आवश्यकता कर्मणि एवास्ति। योगभिन्न कर्म किमपि नास्ति।

अतएव गीतायां योगशब्दः विशेषरूपेण कर्मयोगस्य एव वाचकः। कर्मयोगस्य महान् शिक्षा प्रयच्छन् कृष्णः कथयति –

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्धयोः समो भूत्वा समत्वं योग उच्यते।।[4]

महर्षिः पतंजलिः योगसूत्रे कर्मयोगं परिभाषितं कुर्वन् अस्य त्रीणि अंगानि स्वीकर्तुम् कथयति– 'तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः।[5] श्रीमद्भगवद्गीतायां श्रीकृष्णः कथयति यत् यज्ञो दानं तपश्चैव मनांसि शुद्धिं कुर्वन्ति। अतः तस्य त्यागो न कर्तव्यः। छान्दोग्योपनिषदि अपि उक्तम् – 'अस्माकं कर्तव्येषु यज्ञः प्रथमः द्वितीयं तपः तृतीया च शाखा अस्ति आचार्यस्य समीपे सुकर्मणः प्रयासः।' उक्त परिभाषाभिः इदं स्पष्टं भवति यत् चतस्रः साधनाः– तपः, स्वाध्यायः, दानम्, ईश्वरार्पणम् (यज्ञम्) च मिलित्वा कर्मयोगस्य संज्ञा लभन्ते। कर्मयोगे मनसः एका महत्त्वपूर्णभूमिका अस्ति।[6]

श्रीमद्भगवद्गीतायां वर्णितकर्मस्वरूपं त्रिविधं परिलक्षितम् भवति– सात्त्विकं कर्म, राजसं कर्म, तामसं कर्म च। निष्कामभावेन कृतं कर्म सात्त्विकं कर्म कथितमस्ति। यदा कर्ता स्वकामनासिद्ध्यर्थं कर्म करोति तद् राजसं कर्म अस्ति। कस्यापि अनिष्टमिच्छन् कृतं कर्म तामसं कर्म उच्यते। एवं श्रीकृष्णः आसक्तिं विहाय, कर्मफलं त्यक्त्वा पूर्णसमर्पणेन कर्म कर्तुम् उपदिष्टवान्। एवमेव कर्मयोगस्य महान् शिक्षा एतेषु श्लोकेषु विहितमस्ति –

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ।।[7]
कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ।।[8]
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।। [9]

**ज्ञानयोगः**

गीतायां कर्मणा सह ज्ञानयुक्तस्य प्रेरणा दत्ता। सम्पूर्ण ज्ञानस्य स्रोतः स्वयम् ईश्वरः भवति। तस्य ज्ञानमेव परं ज्ञानमस्ति। परा अपराभेदेन ज्ञानं द्विविधं वर्णितम्। अपरातः परार्थं गमनमेव ज्ञानयोगस्य ध्येयमस्ति। भगवान् कृष्णः ज्ञानयोगं सर्वश्रेष्ठं पवित्रं च अकथयत् –

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।[10]

ज्ञानस्य कृते श्रद्धायाः नितान्तावश्यकता भवति। ज्ञानप्राप्त्यर्थं श्रद्धा अनिवार्या। योगेश्वरकृष्णः कथयति –

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।[11]

ज्ञानप्राप्तेः चत्वारि क्षेत्राणि वर्णितानि सन्ति – प्रत्यक्षं, परोक्षं, अनुमानं आप्तवाक्यं च। जनेभ्यः ज्ञानं प्राप्य सततं सर्वथा स्वस्य उद्धारस्य प्रयत्नं करणीयम्। समाजे व्याप्त भ्रष्टाचारः दुराचारः व्यभिचारादयः कदाचाराणां प्रक्षालनाय तेषां स्थाने सदाचारस्य स्थापनार्थ च गीतायां उद्धृतं श्लोकमिदं अत्युपादेयम् –

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।।[12]

मोक्ष–संन्यासयोगनामके अन्तिमे अध्याये 'संन्यास' शब्देन ज्ञानयोग एव व्याख्यातः–

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन।।[13]

अध्यायास्य सर्वगुह्यतमः श्लोकोऽपि ज्ञानयोगपरक एव अस्ति। उक्तं च – 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।'[14]

**भक्तियोगः**

भक्तिः 'भज्' धातोः क्तिन् प्रत्ययोगेन निष्पन्नोऽस्ति। यस्यार्थः – ईश्वर–सेवा, भजनं, स्मरणं ध्यानं चास्ति। प्रभोः प्रसन्नतायै तत्सर्वं कर्तव्यं येन प्रभोः प्रीतिः भक्तेषु भवेत्। गीतायां भक्त्याः द्वे स्वरूपे वर्णिते – सगुणभक्तिः निगुणभक्तिश्च।

वस्तुतः ज्ञानमार्गस्य पालनं केवलं विज्ञजनाः एव कर्तुं शक्नुवन्ति। कर्ममार्गस्य पालनं केवलं धनिकाः जनाः एव साफल्येन कर्तुं शक्नुवन्ति किन्तु भक्तिमार्गस्य द्वारं सर्वेषां कृते उद्घाटितं वर्तते। धनिकाः निर्धनाः विद्वांसः मूर्खाः सर्वे भक्तिमार्गस्य पालनं कर्तुं शक्नुवन्ति। गीतायां भक्तियोगस्यारम्भः सप्तमाध्यायात् भवति। भक्त्यर्थं चित्तस्यैकाग्रतायां बलं दत्तम्। चित्तस्यैकाग्रतातः भक्त्याः समग्रतापर्यन्तं भक्तिगंगा सततं प्रवाहिता वर्तते। श्रीकृष्णः इमां अमृतधर्म इति संज्ञां ददाति –

'ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।'[15]

सप्तमेऽध्याये एकाग्रता, ईश्वराभिमुखैकाग्रता, अष्टमे सातत्ययोगः, नवमे समर्पणता, दशमे क्रमिकता, एकादशे पिपीलिकातः आरभ्य ब्रह्मदेवं यावत् सर्वत्र व्याप्तं तमीश्वरं समग्रतायामात्मसात् कर्तुं युक्तिर्निरूपिता अस्ति। परविभोः विश्वरूपदर्शनमेव ब्रह्मणः

समग्रदर्शनम्, समग्रतायोगश्चास्ति। अत्र प्रतिकणं व्याप्तमीश्वरं अनुभूय भक्त्याः शिक्षा दत्तास्ति।

भक्तियोगस्य महान् सन्देशः एतेषु श्लोकेषु वर्णितमस्ति –

सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः।।[16]
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहंकारः समदुःखसुखः क्षमी।।[17]
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च में प्रियः।।[18]
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।
शुभाशुभपरित्यागी भक्तिमान्यः स में प्रियः।।[19]

एवं वयं पश्यामः यद् गीतायां कर्मभक्त्योर्मध्ये ज्ञानस्य धारा प्रवाहिता वर्तते। ज्ञानं कर्म च भक्त्या योजयित्वा एकस्य सेतोर्निर्माणं भवति। यमारूह्य साधकः परं तत्त्वं प्राप्नोति। कर्म–ज्ञान–भक्तयः परस्परं मिलित्वा उत्तरोत्तरं श्रेष्ठाः वर्तन्ते। ज्ञानी यदा अभिमानं प्राप्नोति तदा तस्य पतनं भवति। परन्तु भक्तः अनन्यशरण्यतया दीनतया विनम्रतया बलैश्च स्वस्थानभ्रष्टो न भवति। कर्मयोगात् ज्ञानयोगः ज्ञानयोगाच्च भक्तियोगः।

एवं श्रीमद्भगवद्गीता सर्वेषां जनानां कृते कल्याणाय कुंजिका विद्यते। 'गीता रहस्ये' बालगंगाधरतिलकः कथयति यद् गीता मानवमात्रस्य कल्याणाय अस्ति। महर्षिः अरविन्दः श्रीमद्भगवद्गीतायाः 'विज्ञानभाष्ये' लिखति यद् – 'गीतायाः ईश्वरः सीमितव्यष्टिं यावत् ज्ञेय ईश्वरो नास्ति'..इत्यादि। एवं प्रकारेण अस्माकं सर्वेषां कृते एतद् आवश्यकं यत् वयं गीतायाः ज्ञानकर्मभक्तिरूपिण्यां त्रिवेण्यामवहगानं कृत्वा स्वलौकिकं पारलौकिकं च जीवनं धन्यं करवामः।

## सन्दर्भ :


1. श्रीमद्भगवद्गीता, महात्म्य
2. गीता प्रवचन
3. श्रीमद्भगवद्गीता, 3/35
4. श्रीमद्भगवद्गीता, 2/48
5. योगसूत्रम्, 2/1
6. श्रीमद्भगवद्गीता, 4/15
7. श्रीमद्भगवद्गीता, 3/8

8. श्रीमद्भगवद्गीता, 3/20
9. श्रीमद्भगवद्गीता, 3/21
10. श्रीमद्भगवद्गीता, 4/38
11. श्रीमद्भगवद्गीता, 4/39
12. श्रीमद्भगवद्गीता, 6/5
13. श्रीमद्भगवद्गीता, 18/1
14. श्रीमद्भगवद्गीता, 18/66
15. श्रीमद्भगवद्गीता, 12/20
16. श्रीमद्भगवद्गीता, 12/20
17. श्रीमद्भगवद्गीता, 12/20
18. श्रीमद्भगवद्गीता, 12/20
19. श्रीमद्भगवद्गीता, 12/20
20. गीतारहस्य (भाष्य)
21. गीता विज्ञान–भाष्य, महर्षि अरविन्दः

---

डॉ. राजेश कुमार जोशी, सह आचार्य, संस्कृतविभागः, श्री गोविन्द गुरु राजकीय महाविद्यालयः बाँसवाड़ा

---

10

# भारविदृष्टया सामाजिकसांस्कृतिकतत्त्वानि

**पवन कुमार शर्मा**

'साहित्यं समाजस्य दर्पणः', 'यथा लोके तथा शास्त्रे' इत्यादीनि वाक्यानि प्रसिद्धानि। काव्यसमाजसम्बन्धः सनातनः। कविः समाजात् प्रेरितोऽपि भवति, समाजं प्रेरयत्यपि। काव्येषु बहूनि सामाजिकसांस्कृतिकसभ्यतासम्बन्धितत्त्वानि निहितानि विद्यन्ते। कुत्रचिद् कविः कल्पनया याथार्थ्येन वा तेषु तत्त्वेषु न्यूनाधिक्यं निवेश्य आदर्शस्वरूपं समुपस्थापयति। अत्र किरातार्जुनीये निहितानि तान्येव तत्त्वानि कानिचिद् प्रदर्शयिष्यन्ते। यथा भारविः काव्ये दर्शयति यत् समाजे वर्णविशेषस्य स्थितिः कीदृशी? समाजे जनानां परस्परं व्यवहारः सम्बन्धः वा कीदृशः? प्रशासनिकराजनीतिकव्यवस्थायाम् आदर्शस्वरूपं किमासीत्? फलप्राप्तये उद्योगिनां कृते साफल्यरहस्यं किम्? तदा समाजे कविविचारे वा किमेतादृशं विचित्रमभवत् यदिदानीमपि न संभवतीत्यादि।

भारविविरचिते किरातार्जुनीये महाकाव्योचिताः प्रसङ्गानुसारमपेक्षिताः लक्षणग्रन्थवर्णिताः बहवः विषयाः वर्णिताः विराजन्ते। तेषु विषयेषु स्थाने–स्थाने भारतीया–संस्कृति– समाज–सभ्यतानां परिचयः प्राप्यते। संस्कृत–समाज–सभ्यताभिः विना काव्यं सारहीनं सन्देशरहितञ्च भवितुमर्हति एतद्विमृश्य मन्ये कविः यथासम्भवं विषयेऽस्मिन् विभिन्नविषयवर्णन व्याजेन वर्णयति।

संस्कृतिसमाजसभ्यताभिः सम्बन्धितानि कतिपयानि स्थलानि यथामति कतिपयश्लोकेषु दर्शयामि।

भारविः मङ्गलाचरणे वनेचरस्य विशेषणत्वेन वणिलिङ्गी पदं प्रयुङ्क्ते।

**श्रियः कुरुणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्कत वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः।।**

**किरातार्जुनीयम् 1/1**

मल्लिनाथानुसारं पदस्यास्य अर्थः 'ब्रह्मचारिवेषवान्'।[1] ये ये गुप्तचरा राज्ञः भवन्ति तेषु ब्रह्मचारिणः वेषचयनेन तदानीतनसमये यस्य कस्यचिदपेक्षया सर्वत्र तस्य निर्बाधं गमनागमनं संभवति।[2] ब्रह्मचारिणां तदा तादृशं सम्मानं भवति स्म येन तेषां तादृशं नैतिकचारित्रिकस्तरं कल्पयितुं समर्थाः वयम्। अद्यत्वे ब्रह्मचर्याश्रमस्थानां स्थितिस्त्वेतादृशी यत् प्रथमं वयं ज्ञातुमेव न शक्नुमः यदयं ब्रह्मचारी अस्ति न वेति, जानीमस्तथापि विश्वसनीयः न सः। अनेन ब्रह्मचारिणां तदानींतनसमाजे सुस्थितिः इति निश्चितम्।

भारविः वनेचरस्य वाणीं 'सौष्ठवौदार्यविशेषशालिनीं विनिश्चिार्थां इति पदाभ्याम् अल रोति।

**द्विशा विद्याताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे।।**
**किरातार्जुनीयम् 1/3**

सौष्ठवमर्थात् शब्दचारुता अदीनता च। औदार्य महार्थता, तयोर्वा विशेषः तेन शोभते इति सौष्ठवौदार्यविशेषशालिनीं ताम्, विनिश्चितार्थाम् अर्थात् अवितथाभिधेयाम् इति लघुटीकाकारप्रकाशवर्शानुसार शब्दार्थः[3]। अनेन कविः वाण्याः अस्माकं सभ्यतायाः एतान् गुणान् निर्दिशति यान् वयं स्वकीयवाण्यां स्वीकुर्मश्चेत् अस्माकं वाणी प्रभावशालिनी व्यक्तित्वं च परिपक्वं स्यात्। साम्प्रतं जनाः विशेषतस्तु नेतारं यादृशीं वाणीं प्रयु जते तेन विवादः एव प्रायः वर्धते, पत्रकारप्रभृतिभिः तेषां संदिग्धायाः वाण्याः व्याख्यां विभिन्नां कृत्वा सामाजिकराजनीतिक –समरसताहानिर्पुनजीयते। अत वाणीसभ्यताविषये भारविवचनं खल्वस्माभिः पालनीयम्।

कविः स्वामिसेवक संस्कृतेः लघुस्वरूपं दर्शयति। यः स्वामिनं हितं नोपदिशति सः कुत्सितं मित्रं, यः भृत्यात् स्वहितवचनमेव न श्रृणोति सः अपि कुत्सितः स्वामी।

**स किसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स कि प्रभु'।**
**सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः।।**
**किरातार्जुनीयम् 1/5**

स्वामिसेवकमध्ये व्यवहारसंस्कृतेः अप्रतिमः सन्देशः अत्र अस्ति, सः मित्रं नैव यः अनुचिते पथि प्रवर्तमानं मित्रं सभ्यङ्नोपदिशति।[4] अत्र राज्ञः सचिवाः अपि मित्रवदेव भवन्ति अतः तै सम्यक् उपदेष्टव्यम्। स्वामी अपि सेवकात् याथार्थ्यमेव श्रोतुं न प्रवर्तते चेत सोऽपि दुष्ट स्वामी कि च स्वामी एव न[5] एते परस्परम् एवं हिताय प्रवर्तन्ते चेत् सर्वविधोन्नतिः भवत्येतेषां नूनम्।

साम्प्रतमस्माकं राष्ट्रेऽपि केन्द्रराज्यसर्वकारेषु संस्कृतिरियं सुस्थापिता भवेत् तदा तु राष्ट्रं परं वैभवं प्राप्तुं शक्नोति। प्रधानमन्त्री मुख्यमंत्री वा सचिवैः सम्यग्परामृश्य नीतिनिर्माणं करोति चेत् प्रजाकल्याणमन्यथा परस्परमनुचितं परामृशन्तः एते राष्ट्रनाशमेव कुर्वन्ति। इदमेव तथ्यं कस्मिन्नपि संगठने कार्यालये वा पूर्ववदेव फलति। विविधेषु कार्यालयेषु प्रायः परस्परं संघर्शं कुर्वाणाः प्रमुखः तत्कर्मचारिणश्च उत्पादकतायाः ह्यसं कुर्वन्ति।

भारतीयन्यायव्यवस्था तस्मिन् समाजे कीदृशी? इत्यस्मिन् विषये दुर्योधनन्यायव्यवस्था काव्येऽस्मिन् विचारणीया, दुर्योधनः न्यायाधीशरूपे न लोभवशाद् न वा क्रोधावेशेन वा कार्यं विधत्ते, अपितु स्वधर्म इत्येव स्वीकृत्य, न कारणान्तरमपेक्ष्य,

धर्मशास्त्रविदा द्विजेन उपदिष्टेन दण्डेन धर्महानिं नाशयति। अपराधी यदि तस्य पुत्रः शत्रुः वा दण्डप्रयोग सः समं करोति।

**वसूनि वा छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः।**
**गुरूपदिश्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्।।**
**किरातार्जुनीयम् 1/13**

अनेन स्पष्टमेव ज्ञायते यत् तस्मिन् समाजे न्यायव्यवस्थायाः आदर्शस्वरूपमासीत् यत्र राजा रागद्वेशादिना विमुक्तः निश्पक्षतया न्यायं चकार। कार्यमेतद् राजा धर्मशास्त्रज्ञगुरोः वचनानुसारं सम्पादयति स्म। अनेन न्यायव्यवस्थायाः सार्वभौमिक सिद्धान्ताः परिलक्षिताः भवन्ति यथा न्यायाधीशः रागद्वेषरहितः स्यात, कथमपि पक्षपाती तेन न भवितव्यं, तेन, न्यायकार्यं, संविधानानुसारं (यत् वर्तमानपरिप्रेक्ष्ये गुरुवचनं संविधानमेवमन्तव्यम्) सम्पादयितव्यमिति महते गौरवाय अस्मभ्यं तात्कालिकी न्यायव्यवस्थेयम्। वर्तमानकालिकीन्यायव्यवस्थायां रागद्वेशादिविवर्जिताः पक्षपातरहिताः न्यायाधीषशाः दुर्लभा एव यतोहि कथमपि राजनीतिज्ञाः धनादि प्रलोभनैः एतान् स्वप्रभावे कुर्वन्ति पश्चात् एते कथं निष्पक्षाः सन्तः कार्यं कर्तुं प्रभवन्ति। अतः देशरक्षायै निष्पक्षा दण्डव्यवस्था परमावश्यकी।

**दुर्योधनराज्ये क्षेत्रेषु सेंचनाय बहूनि साधनानि आसन् यैः—**
**सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः।**
**वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासति।।**
**किरातार्जुनीयम् 1/17**

तस्य राज्ये समुचितवृष्ट्यभावेऽपि कुल्याम्बुभिः कृषकाः क्षेत्रेषु तावत् सस्योत्पादनं लेभिरे यावत् ते समुचितवृष्ट्या, एतत् कार्यं तेषामतिसौविध्येन बभूव।[6] तस्यां सभ्यतायां सुदृढया सेंचनव्यवस्थया कृषकाः समृद्धाः आसन्, यतः दैवाश्रितायाः वृष्टेः अनिषचितता भवत्येव। विचारणीयमत्र स्वतन्त्रता प्राप्तेः सप्तदषकानन्तरमपि कृषकैः समुचिता सेंचनव्यवस्था स्वक्षेत्रेषु तथा न उपलभ्यते यथा स्यात्। आधुनिककाले विज्ञानप्रधाने कृषककल्याणं कर्तुं सर्वकारः न प्रभवति चेत् चिन्तनीयं यतः तस्मिन् समये दुर्योधनादयः एतत्कर्तुं समर्थाः अभवन्।

तस्मिन् समाजे भारतीयानां पार्श्वे तादृषाः मन्त्रप्रयोगाः आसन् यैः ते सर्पान् वर्षीकर्तुं षक्नुवन्ति स्म। दुर्योधनः कथाप्रसैंषु युधिष्ठिरार्जुनेत्यादिपाण्डवानां नामश्रवणेनैव तेषां बलस्मरणात् लज्जितः सन् अतिष्ठत्।

**कथाप्रसैंन जनैरुदाहतादनुस्मृताखण्डलसूनुविक्रमः।**
**तवाभिधानाद् व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः।।**
**किरातार्जुनीयम् 1/24**

तत्रैव कविः दुर्योधनस्य तुलना मन्त्रपदाद् दुःखितेन वषीभूतेन वा सर्पेण सह करोति।[7] कौषलमिदं तदानींतनसमाजेऽपि आसीत् सैव परम्पराऽद्यापि कुत्रचित दृष्यते परमत्र कथं शब्दानां प्रभावः सर्पेषु, कथ  च वषीकरणमित्यनुसधेयम्।

प्राचीन भारतीय समाजे गृहेषु भार्याणां पतिभिः सह व्यवहार कीदृषः आसीत्? इत्यस्य परिचयोऽप्यत्र मिलति। स्त्रीणां व्यवहारविषये परिचयः द्रोपदीवचनेन प्राप्यते।

द्रौपदी तादृषायविविधषास्त्रज्ञाय राज्ञे युधिष्ठिराय कर्तव्यकथनं कानिचित् तथ्यानि उद्घाटयति। तदा स्त्रीषु तादृषं प्रागल्भ्यमप्यासीत् यत् ताः प्राप्तावसरेषु पुरुषेभ्यः पर्याप्तं कर्तव्योपदेषं ददति स्म, न केवलं लज्जापराः गृहकर्मतत्पराः एव बभूवुः। तथापि पुरुषाणां स्थानं तादृषं गौरवपूर्णमप्यासीत् यत् स्त्रीभिः तेभ्य उपदेषवचनं तिरस्कार इव अभवत्[8] अतः द्रौपदी स्वकथनात् प्राक् स्वकथनसमर्थककारणत्वेन स्वचित्तपीडां दर्षयति।[9]

भारतीयसंस्कृतौ भातृप्रेम्णः बहून्युदाहरणानि विद्यन्ते। भातृप्रेम्णः चर्चायां सर्वप्रथमं रामलक्ष्मणयोः नाम्नी आगच्छतः। पाण्डवकौरवयोः कथायां यत्र भातृद्रोहयुद्धचर्चा प्रायः जायते तत्र कियत् प्रेम पाण्डवेषु परस्परमासीत् इत्यस्यानुमानं किरातार्जुनीयेऽपि कृतवर्णनेन कर्तुं षक्यते। द्रौपदी वनवासमये महावीराप्रतिमधनुर्धरार्जुनस्य स्थितिं वर्णयन्ती युधिष्ठिरं वदति यः धन  जयः पूर्वम् उत्तरान् कुरुन् विजित्यं बहुतरं रुप्यहेमादिधनं तुभ्यमयच्छत् सः महावीरः अधुना तव वल्कलवासांसि आहरति10 अस्य एतादृषी दुर्गतिः जाता। अत्र भातृदुःखं दृष्ट्वा युधिष्ठिराय युद्धप्रेरणा विद्यते तन्मूलेऽपि भातृप्रेमाऽस्त्येव परं तादृषः धन  जयः वने वासं कुर्वन्नपि ज्येष्ठभ्रातुः कृते वत्कलवस्त्राणि आनयति, वने युधिष्ठिरः राजाऽपि नास्ति तथापि अर्जुनस्य मनसि तस्मिन् श्रद्धा प्रेम एव न क्रोध, अतः अर्जुनः तस्य कृते वने सेवकवत् एवाचरति अहो महावीरस्य भातृप्रेम श्रद्धा च।

किरातार्जुनीये भारतीयसमाजे इतिहासप्रसिद्धानां महापुरुषाणां युधिष्ठिरादीनां जीवने कीदृषानि परिवर्तनानि11 बभूवुः तेषां जीवने कीदृषी सरलताऽऽसीत्, कथं वा ते विपत्तिषु धैर्यं भातृप्रेम वा परिपालयतः समयं यापितवन्तः कस्य जीवने आरोहावरोहः नागच्छति[12] इत्यादि तथ्यानां ज्ञान भवितुं षक्यते।

भारतीयसमाजे ब्राह्मणानां प्राचीनकालतः एव बहुसम्मानमासीत्, षनैः षनैः न्यूनताऽस्मिन् आगता, कारणानि बहून्यस्य परं पुरा राजानः अपि ब्राह्माणानां तावत् सम्मानं चक्रुः येन प्रेरिताः प्रजास्तु ततोऽधिकं कर्तुं प्रवर्तन्ते। युधिष्ठिरः तदा ब्राह्मणभोजनानन्तरमेव यदवषिष्टमन्नं तद् भुक्त्वा तृप्तिं प्राप्नोति स्म कार्यमिदं तदा प्रषंसनीयमप्यासीत् येन तद्यषः प्रसृतः बभूव।

**पुरोपनीतं नृप! रामणीयकं द्विजातिशेषेण यदेतदन्धसा।**
**तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपु।।**
**किरातार्जुनीयम् 1/39**

राजाऽपि युधिष्ठिरः एवं करोति, यतः राजकार्ये व्यस्तता, भवत्येव तथापि कार्येणाऽनेन तन्मनसि ब्राह्मणेषु श्रद्धा व्यज्यते। ब्राह्मणसम्मानं समाजे मन्वादिभिः[13] बहुवर्णितम्। अद्यतनसमाजे ब्राह्मण सम्मानं कथं वर्धतां येन सामाजिकसंरचना प्रतिष्ठां लभतामिति चिन्तनीयम्।

प्राचीनभारतीयसमाजे राजनीतिकव्यवस्था विषये कविः बहुत्र निर्दिषति। तस्मिन् समये साररूपे राजनीति स्वरूपं दर्षयन् भीमसेन युधिष्ठिरमाह यः नयः सहायकादीनां, कार्य साधनोपायानां, देषकालानुसारं विभागं कृत्वा उपायावलम्बनस्य, षत्रुप्रस्तुतविपत्ति समुचितप्रतीकारस्य, विजयप्राप्तिरूपकार्यसिद्धेः आश्रयं कृत्वा प्रवर्तते स एव नयः कोषचतुरैंसेनयोः उत्पादकः।[14] प चौंधारितंः[15] नय एव कोषदण्डसाधनमिति। एतानि प चोपयानि आश्रित्य तदा राजनीतिः प्रवर्तते स्म तस्याष्च राजनीतेः मुख्यं लक्ष्यद्वयमासीत् प्रथमंकोषवृद्धिः, द्वितीयं दण्डषक्तिवृद्धिः। आधुनिकराजनीतौ लक्ष्यद्वयं प्राप्यते चेत् कस्मिष्चिदपि देषे कोषेन प्रजापालनादिकार्याणि, दण्डेन च राज्यरक्षा राज्यरक्षेत्यादिकार्याणि सम्यग् भवन्ति, निर्धनः सैन्यबलहीनः राष्ट्रः बलवद्भिः धनवद्भिः राष्ट्रैः वारम्वारमभिभूयते। यथा चीनदेषः साम्प्रतं धनबलसमन्वितः सन् भूटानतिब्बतसहितप्रतिवेषिराष्ट्रान् वारम्वारं भिन्नप्रकारेण दुःखिनः करोति। सार्वकालिकं राजनीतिकसत्यमत्रोद्घाटितम्।

विविधसमस्याभिः ग्रस्तः युवा अद्यतनः लक्ष्यं प्राप्तुम् उचितानुचितसाधनानि स्वीकृत्य असफलो भवति बहुवारं, क सारमन्त्रः तस्मै स्यात्। विषयेऽस्मिन् पाण्डवाः आपद्मग्नाः युवानः एव, भीमसेनः युधिष्ठिरं प्रति परामृषन् साफल्यस्य परमरहस्यत्वेन आत्मपौरुषमेव वर्णयति।[16] भीमसेनः कथयति स्वाभिमानिनः उच्चपदंप्राप्तुमिच्छतः विपत्तिनिवारणक्षमम् आलम्बनम् आत्मपौरुषमेव।

द्रौपद्यापि तपसे गच्छन्तमर्जुनं लक्ष्यप्राप्तये निरुत्सुकः भूत्वा पुरुषार्थस्य परामर्षं ददाति, सा कथयति यषःप्राप्त्ये सुखप्राप्त्ये असाधारण कार्यं वा कर्तुं प्रवृत्तस्य निरुत्कण्ठस्य उद्यमवतः पुरुषस्य पार्ष्वे सफलता स्वयमेव आगच्छति।[17] भारतीयसंस्कृतौ पुरुषार्थस्य वर्णनं कविभिः[18] बारम्बारं क्रियते तन्महत्त्वं स्वीकृत्याऽत्रापि।

भारतीयसंस्कृतिः गौरवमयी विचित्रा च। भारते एतादृषाः विषिष्टाः प्रभावषालिनः मुनयः महापुरुषष्च सम्जाताः येषां सदृषानि कार्याणि कर्तुमद्यतनाः वैज्ञानिकाः अपि न प्रभवन्ति। किरातार्जुनीये महर्षिः वेदव्यासः अर्जुनं विद्यामध्यापितवान्। सा विद्या

महर्षेः मुखात् निर्गत्य पार्थमुखं प्राविषत्।

**निर्याय विद्याय दिनादिरम्याद् बिम्बादिवार्कस्य मुखान्महर्षेः।**
**पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे।।**
**किरातार्जुनीयम् 3/25**

विधायाः प्रवेषः एवमभवत् यथा किमपि वस्तु कुतः निर्गत्य कुत्रचित् प्रविषति, न च समय अपेक्षितः, कार्यमिदम् अतिषीघ्रतया स जातम्।

**योगं च तं योग्यतमाय तस्मै तपः प्रभावाद्वितितार सद्यः।**
**येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः।।**
**किरातार्जुनीयम् 3/26**

तस्मिन् समाजे विद्याप्रदानस्य विधिरयं वैचिष्यजनकः, आधुनिकसमाजाय अनुसन्धानविषयष्च। एवमेव तस्मिन् समाजे कतिपयविषिष्टजनानां पार्ष्वे तादृषी क्षमताप्यासीत् यया जनः न केवलं स्वयमपितु आत्मना सह अपरमपि जनं षीघ्रतया दूरतरं देषं नेतुं समर्थः आसीत्। महर्षिः वेदव्यासः स्थानविषेषेण गुणेन तपःसिद्धिदर्षनाद् इन्द्रनीलपर्वतं गमनाय अर्जुनाय उपदिषति, तत्र नेतुं तत्क्षणमेव एकः गुह्यकः महर्षिणाः उपस्थितीक्रियते यः अर्जुनं क्षणात् दूरस्थं पर्वतं नेष्यति।

**करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपासि।**
**शिलोच्चयं चारुषिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम्।**
**किराता. 3/29**

अनेन भारतस्य प्राचीनसभ्यतायाम् एतादृषक्षमतायाः परिचयः प्राप्यते येन साधनं विना जन कुत्रचित् अपि गन्तु षषाक। इति दिक्

## सन्दर्भ सूची :


1. वर्णः प्रषस्तिरस्यास्तीति वर्णी ब्रह्मचारी। तदुक्तं–
   स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
   संकल्पोऽध्यवसायष्च क्रियानिवृत्तिरेव च।।
   एतन्मैथुनमष्टौं प्रवदन्ति मनीषिणः।
   विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्।। एतदष्टविधमैथुनाभावः प्रषस्तिः।
   वर्णाद् ब्रह्मचारिणि इतीनि प्रत्ययः। तस्य लिंं चिह्नमस्यास्तीति वर्णिलिंौ, ब्रह्मचारिवेषवान् इत्यर्थः। घण्टापथटीका (मल्लिनाथः) 1/1
2. ब्रह्मचारिवेषगृहणाद्धि गूढपुरुषतया ज्ञातेषु विष्वासान्महाजनो निपुणतया पृष्टः सन् न किं चद्वोपयति।– जोनराजटीका, पृष्ठ–2 संपादन डॉ. विरुपाक्ष वि. जुड्डीपाल प्रकाषन 2008

3. विनिष्चितार्थाम्! विनिष्चितं प्रमाणपरिच्छिन्नोऽर्थो यस्याः सा तथा तां विनिष्चितार्थाम् अवितथाभिधेयाम्। पुनः कथं भूताम्? सौष्ठवौदार्यविषेषषालिनीम्। सौष्ठवं षब्दचारुता, अदीनता च, औदार्यं महार्थता। विषेषा 'अष्लिष्टतादयः प्रेक्ष्या गुणास्तै षालते ष्लाघते तच्छीला– प्रकाषवर्ष लघुटीका–पृष्ठ–7, सविमर्षसंपादकः डॉ. विरुपाक्ष–प्रकाषन 2008
4. योऽधिपं स्वामिनं साधु हितं न षास्ति न विज्ञापयति स किसखा नैव सखेत्यर्थः प्रकाषवर्षटीका–संपादन–विरुपाक्षः–पृष्ठ–10
5. हितादनुकूलादनुजीविनो न यः संषृणुते सम्यक् न षृणोति नौंकरोति च। सोऽपि किं प्रभुर्भवति? नैव स प्रभुरित्यर्थः। प्रकाषवर्षटीका संपादन विरुपाक्षः प्रका.–2008
6. सुखेनायाासं विना यद्वा कृषीवलैः सुखेन लभ्या यतोऽदेवभातृकाः न देव इन्द्रो माता भासां ता 'नदीमादृका इत्यर्थः। अत्रोत्प्रेक्षते अकृष्टपच्या इव यथा षृङ्गारादयः।–जोनराज टीका–संपादन विरुपाक्ष पृष्ठ–21 प्रका.–2008
7. यथा सर्पः कथाप्रसैंन गारुडिकेन कथितात् गरुडमन्त्रा छुत्वा व्यथते। स चानुस्मृताऽऽखण्डलसूनवे इन्द्रानुजपक्षिणो गरुडस्य क्रमः पदाक्रमणं येन– जोनराजटीका संपादन विरुपाक्षः पृष्ठ–27 प्रकाषन 2008
8. भवादृषेषु प्रमदाजनोचितं भवत्यधिक्षेप इवानुषासनम्।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमयाः दुराधयः।। किरातार्जुनीयम् 1/28
9. देवराणामप्यग्रे उक्त्वा प्रागल्भ्यप्रसैंमाष ्याह 'भवादृषेषु महाराजेषु प्रमदाजनेनोदितमनु–षासनमुपदेषोऽधिक्षेपोऽवमान इव यद्यपि भवति तथापि निरस्त उल्लङ्घित नारीसमयो दाढ्र्याभावरूपो यैस्ते। दुराधयो विशमाष्चित्तपीडा वक्तुं मां व्यवसाययत्युघतजयन्ति। प्रमदाषब्दः साकूतः। प्रमदाषब्दस्य स्वविषय पर्यवसानात्केवलं चित्तपीडैव प्रागल्भ्यनिमित्तं न तु बुद्धिदर्प इति सूचयति। –जोनराजटीका पृष्ठ 29 संपादन–डॉ विरुपाक्ष–प्रकाषन–2008
10. विजित्य यः प्राज्यमयच्छदुत्तरान्कुरुनकुप्यं वसु वासवोपमः।
स वल्कवासांसि तवाधुनाऽऽहरू करोति मन्युं न कथं धन जयः।। किरातार्जुनीयम् 1/35
11. पुराधिरुढः षयनं महाधनं विबोध्यसे यः स्तुतिगीतिमैंलैः।
अदभ्रदर्भामधिषय्य स स्थलीं जहासि निद्रामषिवैः षिवारुतैः।। किरातार्जुनीयम् 1/38
12. कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततः वा।
नीचैर्गच्छत्युपरि च दषा चक्रनेमिक्रमेण।। मेंघदूतम् उत्तर–49
13. भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा, नरेषु ब्राह्मणाः स्मृताः।। मनुस्मृति 1/16
ब्राह्मणो जायमानो हि पृथिव्यामधि जायते।

ईष्वर सर्वभूतानां धर्मकोषस्य गुप्तये। मनुस्मृति 1/19

14. प्रभवः खलु कोषदण्डयोः कृतप  चौंविनिर्णयो नयः।
स विधेयपदेषु दक्षतां नियति लोक इवानुरुध्यते।। किरातार्जुनीयम् 2/12

15. कर्मणामारम्भोपायः पुरुषद्रव्यसंपद् देषकालविभागः विनिपातप्रतीकारः कार्यसिद्धिरिति पंचांगों मन्त्रः' अर्थषास्त्रं कौटिलीयम् विनयाधिकारिके मन्त्राधिकारः, पृ.सं.–46

16. अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम्।। किरातार्जुनीयम् 2/13

17. यषोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सकेवा  मुपैति सिद्धिः।। किरातार्जुनीयम् 3/40

18. आलस्यं हि मनुष्याणां षरीरस्यो महान् रिपु.।
नास्त्युद्यमसभो बन्धुः कुर्वाणो नावसीदति।। नीतिषतकम्/86

## सन्दर्भ ग्रन्थ सूची :


1. किरातार्जुनीयम् (घण्टापथटीकासहितं सरलाहिन्दीव्याख्योपेतं) व्याख्याकारः सुधाकरमालवीयः प्रकाषक चौखम्भा कृष्णदास अकादमी, वाराणसी सं., 2009
2. किरातार्जुनीयम् (त्रैसर्गिकं) नृसिंह–प्रकाषवर्ष–जोनराजकृताभिः टीकाभिः विभूषितम् सविभर्षसंपादकः डॉ. विरूपाक्ष वि. जड्डीपाल्, प्रकाषक–अमरग्रन्थ पब्लिकेषन्स, दिल्ली, प्रथम संस्करण 2008
3. नीतिषतकम्–सम्पादकौ डॉ. रामनारायणझा, डॉ. रणजीतकुमारः, प्रकाषक जगदीषसंस्कृत पुस्तकालय, जयपुर, प्रथम संस्करण 2011
4. मनुस्मृतिः सरला हिन्दीव्याख्योपेता संपादकः पं. रामेष्वरभट्टः, प्रकाषक चौखम्भा संस्कृत प्रतिष्ठान, दिल्ली, संस्करण 2011
5. मेंघदूतम्–इन्दिरा संस्कृत–हिन्दी–व्याख्योपेतं व्याख्याकार–डॉ. अर्कनाथ चौधरी, प्रकाषक – जगदीष संस्कृत पुस्तकालय, जयपुर, संस्करण–2000
6. कौटिलीय अर्थषास्त्रम्, हिन्दीव्याख्योपेत, व्या. वाचस्पति गैरोला, चौखम्भा विद्याभवन सं. 2013


पवन कुमार शर्मा, शोधच्छात्रः, राष्ट्रीय संस्कृत संस्थान, तृषूर्परिसरः

16

# साकेतसौरभमहाकाव्यस्यसमीक्षणम्

डॉ. उम्मेदसिंहः

आधुनिकसंस्कृतमहाकविषुडॉ. भास्कराचार्यत्रिपाठिवर्यअतिलोकप्रियोवर्तते। श्रीरामस्यवनवासपथेप्रयागचित्रकूटाञ्चलंपवित्रतमं स्थानंवर्तते। महाकविगोस्वामी–तुलसीदासः रामचरितमानसे एतस्य महत्वंवर्णयति।[1] एतादृशैवाञ्चलेजसरानामकस्थान–समीपेपाण्डरग्रामः आधुनिकसंस्कृतज्ञानामन्यतमंस्थानंभजतेमहामहोपाध्यायानांडॉ. भास्कराचार्याणांजन्मभूमिरस्ति।

महाकवेः जन्मस्थानविषयेनास्तिकोऽपिसन्देहः, यतोहितैः स्वकीयप्रबन्धेषुस्पष्टरूपेण वर्णनंकृतम्। तेषामनुसारमेवानन्तचतुर्दश्यां 1999 संवत्सरेप्रयागतीर्थ–पार्श्वेचित्रकूटपथे–ऽवस्थितपाण्डरग्रामेसारस्वतसाधकोजनिंलेभे, एतदनुसारम् ईसवीयवर्षे 13 सितम्बर 1942 तमे वर्षे।[2]

आधुनिकसंस्कृतज्ञेष्वन्यतमः महामहोपाध्यायः डॉ. त्रिपाठिवर्यः संस्कृसाहित्यकार–महाकवि–समीक्षक–पत्रकार–सम्पादक–प्रकाशक–प्रबुद्धविद्वदित्यादीनांभूमिकांनिर्वहन् ३दिसम्बर 2008 तमे ईसवीयवर्षे श्वसनतन्त्रेऽवरोधेनदिवंगताः। महाकवेराकस्मिक–गमनेनसम्पूर्णसंस्कृतजगत् स्तब्धोऽजायत।

विंशतिवर्षेवयसिलिखितं खण्डकाव्यं 'अजाशती'[4] कवेःबालप्रतिभायाः नैसर्गिकोदाहरणमस्ति।दशसहस्रलघुवर्णेषुनिबद्धम 'लघुरघु'[5] अतिविशिष्टंनवीनं–प्रयोगमस्ति। अन्याः महत्वपूर्णाः विंशत्यशधिकाः कृतयः अपिसन्ति। राष्ट्रपति–पुरस्कारेणसम्मानितः महाकविः त्रिपाठिवर्यः श्रीरामस्य कथामाश्रित्य 'साकेतसौरभम्'[6] नाम्नामहाकाव्यमेतद्वयरचयत्।

**बहवोकवयोजातारामकाव्य विधायिनः**
**अभिरामकवित्वेतुप्रथतेभास्करः कविः।।**

–(साकेतसौरभस्यप्रशस्तयः–डॉ. बालकृष्ण शर्मा)

अत्यन्तपरिष्कृतंस्पृहणीयंहिन्दीपद्यभाषान्तरयुतंलोकप्रियमहाकाव्यंसाकेतसौरभम् 'राष्ट्रियसंस्कृतसंस्थानम् नवदेहली इत्यनेनसहयोगेननागप्रकाशनदिल्ली तः 2003 तमेईसवीयवर्षेप्रकाशितम्।

सन्तुनामरामकथाश्रितानिबहूनिकाव्यानि, परंकला–सारल्ययोः यादृशः मणिका–ञ्चनसंयोगोऽस्मिन् महाकाव्ये दृश्यते न तादृशोऽन्यत्र। भारतवर्षस्यसाहित्यहस्ताक्षरैः

महाकाव्यस्यास्य बहुप्रशंसाकृताऽस्ति। अस्य महाकाव्यस्यकृतेकविः दिल्ली–संस्कृतअकादम्याः अखिलभारतीय पण्डितराजजगन्नाथपद्यरचनाप्रथमपुरस्कारः (2003 वर्षे), के.के. बिरलाफाउन्डेशनइत्यस्य वाचस्पतिपुरस्कारः (2006), उत्तरप्रदेश–संस्कृतसंस्थानस्य पद्यरचनापुरस्कारः (2007), 2007 तमेवर्षेराष्ट्रपतिपुरस्कारः प्राप्तवान्।

**साकेतसौरभस्य महाकाव्यत्वंकथानकस्य वैशिष्ट्यञ्च**

साहित्यशास्त्रकारैः महाकाव्यस्य निर्धारितानांमानदण्डानांपूर्तिःमहाकाव्यमिदंकरोति। अवतार–संस्कार–संकल्प–सहकार–उद्योग–विक्रम–अभिषेक–दिग्विजयेत्यादिभिः शीर्षकैः अष्टसर्गाः सन्ति। पञ्चनवत्यधिकचतुःशतंपद्यैरूपेतंमहाकाव्यमिदंराम–कथाप्रतिपाद्यं 'साकेतसौरभ' सहृदय मनोहरमुपवर्णयति। महाकाव्यस्य नायकः श्रीरामः धीरोदात्तः कथाइतिहासप्रसिद्धा, जनमानसेऽनुगुञ्जिता, श्रेष्ठरामकथाकथानकरूपे, अष्टसर्गेषुविभक्तं, न अतिदीर्घ न लघु। भारतीय संस्कृतेः श्रेष्ठनिरूपणं, धर्म–अर्थ–काम–मोक्षपुरूषार्थनांप्राप्तिः, नदी–पर्वत–ऋतुप्रकृतिवर्णनम्, अलंकारयुतं, पधानरसोवीरः अन्ये श्रृंगारकरूणादयः सन्ति। महाकाव्यस्य लक्षणलक्षितोऽयंमहा–काव्यंहिन्दीसंस्कृतभाषयोः गेयात्मकपद्यैः सर्वेषामनांसि रञ्जयताधुनिकमहा–काव्येष्वद्वितीयंस्थानंभजते।

महाकाव्यस्यास्य कथावस्तुवाल्मिकीरामायण–अग्निपुराण–रामचरितमान–सञ्चेत्येतेषुस्वीकृता, परन्तुस्वकीयनवीनमौलिकोद्भावनाप्रयोगमस्ति। अत्र रामस्यादर्शचरित्रस्य सार्वकालिकसुगन्धोवर्तते। रचनेयंसनातनविश्वजनीनजीवन–मूल्यानांसमाकलनमस्ति न तुइतिहासस्य पुनर्रचना। त्रिपाठिवर्यैः भारतीयदर्शनस्य निष्कर्षरूपेणरामतत्वस्यस्थापनाकृता।

**"रामो धर्मस्य पर्यायोनित्योनिगमविग्रहः।**
**नियमात्मानिराकारः साकारश्चनियामकः।।[7]**

पारम्परिककथानकमाश्रित्यैवनूतनमौलिकोद्भावनाभिः वर्णनवैविध्येनविशिष्टतया च सरसताकविनाउत्पादितम्–

वाल्मिकी शरीरेदशरथस्य संकल्पनाऽद्भुतम्–

**"श्रवणस्य पितुः शापात् किमुरामनुद्रुताः।**
**कौशलेशस्य वैप्राणाः वाल्मिकीश्वासमाविशन्।।[8]**
**क्रौञ्चधातंपुरोदृष्ट्वा क्षणसाधारणीकृतः**
**रधुवंशरहस्यानांविज्ञः प्राचेतसोऽभवत्।।[9]**

शबर्याः चरित्रेनवीनसंकल्पनाअतिसमीचीनातथाभारतीयनारीणांआदर्श–त्याग–तप–भक्तेश्चअन्यतमोउदाहरणंवर्तते।

साकेतसौरभस्य विशिष्टताअस्य गीतिकाव्यत्वेनअपिअस्ति। महाकाव्येलोकगीता–नांप्रयोगंमनोहरमस्ति। पुष्पवाटिकाप्रसंगेंमनोरमपंक्तिषुसुसज्जितमिदंपद्यंदर्शनीयम्

**''पुष्पभारेणनम्रालतामाधवी**
**तादृशीभूतलेवर्ततां वा न वा।**

सीतावियोगविरहगीतेरामेणसहप्रकृतेः रूदनं, तस्यवर्णनमतिविशिष्टम्–

**''कान्तारे वा जलेऽनलेक्वचिदधुनाचिरं शयिष्ये।**
**हेसीते! नोत्वयाविनापलमपिजीवितं धरिस्ये।।**[10]
**''जल जंगल याज्वलितअनलमेंसोताहीरहजाऊँ**
**हेसीते! मैंबिनातुम्हारेअब न जिऊँ मरजाऊँ।।**
**स्मृत्वाजनकसुतामिवजातंसर्वंगगनमेवसदयम्।**
**वर्षतिटुप्प् टुप्प् जलधारा धग् धक् कुरूतेमेह्रदयम्।।**[11]

बालेः प्रयाणगीते, शरभंगऋषेः महाप्रयाणगीतेमनोरमपंक्तिद्वयस्य (टेक अन्तरा वा) प्रयोगंसम्प्रेषणस्य गेयविधारस्ति।स्वसञ्चितसमिन्मञ्चाद् रामाग्रे शरभंगऋषेः महाप्रयाणगीतं दृष्टव्यम्–

**''पञ्जरवितानबन्धेन्यस्तः कपोत एकः।**
**निर्गन्तुमुत्सुकोऽयं त्रस्तः कपोत एकः।**[12]
**इनहाड की ठठरियोंमेंकैदहैकबूतर**
**पिंजरातुड़ारहाहैबैचेन यह कबूतर**
**चञ्चूविकारचञ्चू पक्षौवलक्षलक्षौ**
**पादौपुनर्विभातः शादानुकारदक्षौ।**
**वात्यासुसन्नतासुव्यस्तः कपोत एकः।**
**निर्गन्तुमुत्सुकोऽयं त्रस्तः कपोत एक।**[13]

विष्णोः 'अजन्माइत्यस्य कारणंनाभिनालस्याकर्त्तनं, अवतारेषुरामनामस्य सार्थकता, भीषणनामयुतंविभीषणस्य भक्तशिरोमणित्वं, सत्याश्रयी, अल्पमतयुक्तरामस्या–सत्बहुमत्प्रधानराक्षसोपरिजयं, पादाभ्यांचलित्वाजनसम्पर्कं, इत्यादिनिमनोरम–ह्रदयावर्जकस्थलानिसन्ति।

शबर्याःमृत्युसहजसमाधिना, दशरथस्य प्राणानांवाल्मिकीशरीरेप्रवेशः, अशोक–वाटिकायांहनुमत् गर्जनयारावणस्य मूर्च्छा, सीतयापुत्राभ्यामक्षरज्ञानंप्रदानमुल्लेखनीयाः घटनाः सन्ति।

साकेतसौरभंमहाकाव्यस्य शुभाशंसायांआचार्यश्रीनिवासरथः सत्यमेवउक्तवान्–

**''कथापरम्परा याताकविनाभुविसाम्प्रतम्।**
**निजवाणीप्रसादेनपुनर्नीतानवीनताम्।।**

**श्रीरामपादाम्बुज–भक्तिवित्तंनवंमहाकाव्यमिदं यशस्यम्।**
**श्रीभास्कराचार्यगिरांप्रसारंतनोतुकीर्त्या सममत्र लोके।।**

मध्यप्रदेशशासकीयमहाविद्यालयस्य प्राचार्यःविद्वद्वरः डॉ. रामकृष्णसर्राफ–महोदयेनोक्तम्

**''साकेतसौरभं दृष्ट्वा धारणापरिवर्तिता।**
**कालिदासः कनिष्ठायांभास्करोऽनामिकास्थितः।।**
**''साकेतसौरभंनूनंश्रेष्ठकाव्यंगुणान्वितम्।**
**एतत् सर्वगुणादयत्वात् सुतरांसौरभायते।।** (साकैतसौरभस्यप्रशस्तयः)

साकेतसौरभेछन्दप्रयोगवैशिष्ट्यम्–छन्दः प्रयोगेमहाकविनाविलक्षणता–प्रदर्शिता।अनुष्टुप्छन्दसः सर्वाधिकप्रयोगोविहितः।

लोकगीतानांनवीनप्रयोगमत्र कृतम्।सवैया, अश्वघाटीअप्यत्र शोभां वर्धयन्ति। वैदेशिक (जापानी) छन्द ''रिंगोंहाईकू'' इत्यस्य प्रयोगंविक्रमसर्गस्य 36–47 श्लोकपर्यन्तंकृतम्।

यथा–

तीरेस्मितरूचिरैः
शंखशुक्तिनिकरैः।
सोऽयं मुदितः
कापालिकःआभाति।
सफलतन्त्रः
फेनिलोदधिः
समुच्छलतिननु
भवन् स्वतंत्रः।।[14]

मधुरगेयात्मक–छन्दसांवैविध्यताकाव्येऽस्मिन् दृश्यते। 495 श्लोकेषु 18 छन्दसांप्रयोगमभवत्

**अलंकारप्रयोगम्**–साकेतसौरभेअनुप्रास–यमक–श्लेष–उपमा–रूपक–मीलित–क्रमिकउत्प्रेक्षा–हेत्वाभास–सहोक्ति–अर्थान्तरयास–यथासंख्य–विरोधाभास–प्रतीप–अपहुति–सन्देह–अतिश्योक्ति–विनोक्ति–क्रियादीपकादयः अलंकाराणांमनोहर–प्रयोगंकृतम्।

उत्प्रेक्षा– **''दुर्जनं खञ्जनंमन्ये यत्कुक्षौ श्यामिकाभवेत्।**
**सज्जनः रञ्जनंमन्ये श्यामिकां योऽनुरञ्जयेत्।।**[15]

उपमा– **''रत्नसौधेषुचत्वारः क्रीडन्तोजानुपाणिभिः।**
**कपिकोटिसमाकीर्णंचित्रकूटमदर्शयन्।।**[16]

यमकःतु कवेः पद्येषुनर्तनं एव करोति।

**''रसमयंव्यतनोद् रविः।।**[17]

**''नववयांसिवयांसिचतुर्दिशम्।।**[18]

**''क्षुपवनाः पवनाः परितोववुः।।**[19]

अस्य महाकाव्यस्य प्रधानरसः वीरसोवर्तते। माधुर्य–ओज–प्रसादगुणानाम–पूर्वसंगतिःवर्तते। लोकगीतानांश्रृंगारे च माधुर्यगुणस्याद्भुतंसंयोजनमस्ति। युद्धप्रसंगेषुरावण–हनुमान, रावण–अंगदवार्तासुओजगुणस्य प्रयोगंतथा च प्रसादगुणस्योपस्थितिः तुमहाकाव्येऽस्मिन् सर्वत्र दृश्यते।

आधुनिकपरिप्रेक्ष्ये साकेतसौरभस्य महत्वम्–प्राचीनकालाद् रामकथासंस्कृतेः संस्काराणां च प्रेरणादायिनीअस्ति। एतेनकारणेनवैदिकवाङ्मये, दशरथजातके, वाल्मिकीरामयणे, पुराणेषु, रामचरितमानसे च रामकथायाःपल्लवमभवत्। संसारस्य विभिन्नभाषासुरामकथायाः प्रसारंजातम्। वर्तमानेनवीनसंकल्पनानां, मौलिकोद्भावनानांमूलकथयासहसंस्कृत–हिन्दीभाषयोः समानान्तररचना त्रिपाठीवर्यैःकृता। रामकथायाःमहत्वस्य विषयेभास्कराचार्यः कथयति।

''कथाकर्णपथा याताश्रीरामस्य यथा–यथा।
व्यथाऽपिवितथाजाताप्रथानव्यातथातथा।[20]
चारूशीलाचिरंशीलाचिदुन्मीलामहीतले।
मनःकीलाविपन्मीलारामलीलाविराजते।।[21]

अस्मिन् समयेसंसारेसर्वत्राशान्ति–भ्रष्टाचरण–कदाचारञ्चसर्वत्र व्याप्तंवर्तते। साकेतसौरभेरामस्य श्रेष्ठाचरणं, मर्यादापालनम्, संस्काराणांजीवनेअवधारणां–प्रतिप्रेरणाप्राप्यते। हिन्दीभाषायुक्तत्वेनसर्वेषांजनानां मध्ये लोकप्रियंभविष्यति।

द्विग्विजयसर्गस्यान्ते कविःस्पष्टरूपेणसाकेतसौरभस्य वर्तमानसन्दर्भेमहत्वा–वश्यकताञ्च वर्णयति–

**''साकेतेकिं शुभंकर्मलंकायांकिञ्च कल्मषम्।**
**इतिरामकथा–मर्मकाव्यवर्त्मनिराजते।।**[22]
**कालेनेमिसुतान् भ्रान्त्यावयमद्य भजामहे।**
**कक्षे खड्गंमुखेरामंकलयाकलयामहे।।**[23]
**ननेताकालनेमिस्यात् प्रजेशो वा दशाननः।**
**सत्पथंप्रथयत्येषासप्तमस्य हरेः कथा।।**[24]
**उदात्तचरितंकाव्यंपठेदव्यंसकोजनः।**
**कर्तव्यंभवितव्यञ्च येनभव्यं द्वयं भवेत्।।**[25]

**सन्दर्भ :**


1. श्रीरामचरितमानस 2.112
2. निर्झरिणी, कविपरिचयः, पृ. 123, नागप्रकाशन, दिल्ली
3. बुधवासरः शुक्लपक्षपञ्चमीमार्गशीर्ष् संवत् 2065
4. अजाशती–नागप्रकाशन, 11/ए, जवाहरनगर, देहली 110007
5. लघुरघु, नागप्रकाशन, 11/ए, जवाहरनगर, देहली 110007
6. साकेतसौरभम्, नागप्रकाशन, 11/ए, जवाहरनगर, देहली 110007
7. साकेतसौरभम्, 1/13
8. साकेतसौरभम्, 2/45
9. साकेतसौरभम्, 2/46
10. साकेतसौरभम्, 3/60
11. साकेतसौरभम्, 4/31
12. साकेतसौरभम्, 3/22
13. साकेतसौरभम्, 3/33
14. साकेतसौरभम्, 6/42
15. साकेतसौरभम्, 1/23
16. साकेतसौरभम्, 1/31
17. साकेतसौरभम्, 1/62
18. साकेतसौरभम्, 1/63
19. साकेतसौरभम्, 1/64
20. साकेतसौरभम्, 1/17
21. साकेतसौरभम्, 1/18
22. साकेतसौरभम्, 8/48
23. साकेतसौरभम्, 8/49
24. साकेतसौरभम्, 8/50
25. साकेतसौरभम्, 1/53


डॉ. उम्मेदसिंहः, व.अ., संस्कृतशिक्षाविभागः, विला–12, शालीमारनगरम्, अलवरम